# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२२ वर्षे २ अङ्कः

वै० संवत् २०२४

प्रकाशनतिथिः
पौषी-अमावास्या, सं० २०२४

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०




२२ वर्षे २ अङ्कः

# विषयानुक्रमणिका



—:*:—

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२२ वर्षः } भाद्रपदपूर्णिमा, संवत् २०२४ { २ अङ्कः

# अविद्याध्यासनिरूपणम्

श्रीमदानन्दझाः, प्राध्यापकः, लखनऊ-विश्वविद्यालयः।

संसारोऽयमाविद्यकः, अविद्याबलाच्चिदात्मनि परमार्थसत्येऽध्यस्त इति सर्वथा विख्यातः शाङ्कराद्वैतसिद्धान्तः। तत्र किं नामाविद्यायाः स्वरूपम्, कश्चाध्यास इति जिज्ञासायामुपन्यस्यते किञ्चिदत्र तत्स्फुटीभावाय।

शाङ्करे ह्यद्वैतवेदान्तसिद्धान्ते व्यवहारत्वं भवत्यध्याससाध्यत्वव्याप्यम्। अर्थाद् व्यवहारः क्रियात्मकः शब्दप्रयोगात्मको वा यः कोऽपि किं न भवतु, भवत्येव हि सर्वोऽसावध्याससाध्यः। एवमेवाध्यासत्वमपि मन्यते तावदज्ञानजन्यत्वव्याप्यमेव। यतो ह्यसत्येवाधिष्ठानज्ञाने शक्नोति कर्तुमधिष्ठाने तत्र नन्वध्यासमारोपभ्रमविभ्रमादिशब्दवाच्यं कथञ्चिदपि कुत्रचित् कश्चित्। नहि रज्जौ कृतरज्जुत्वप्रकारकज्ञानः कोऽपि करोति तदव्यवहितोत्तरं तत्र सर्पोऽयमिति नन्वनाहार्यं ज्ञानम्। सांसारिकाखिलव्यवहारसाधकं संसारज्ञानं नाहार्यमित्यत्र मन्ये नास्ति कस्यचिद्विमतिः।

यद्यपि सत्यां चैतस्यां वस्तुस्थितौ यज्जगदध्याससाधनम्, तदेवाविद्याऽज्ञानमायाप्रकृत्यादिशब्दैस्तत्र तत्र प्रोच्यत इत्यविप्रतिपन्नं सर्वथाऽऽचार्याणां तेषां तेषां शाङ्कराद्वैतमार्गमनुसरताम्, तथापि समवलोक्यन्ते ते तद्गतेषु विशेषेषु विप्रतिपन्नाः। तथाहि पदार्थतत्त्वनिर्णयकाराणां मते सर्वेषु जागतिकेषु कार्येषु घटपटादिषु 'सन् घटः' 'सन् पटः' इत्यादिसर्वजनीनप्रतीत्यनुसारं सत्तात्मकस्य ब्रह्मधर्मस्यानुगमदर्शनेन ब्रह्मोपादनकत्वम्, 'जडो घटः,

जडः पटः' इत्यादितथाविधप्रतीत्यनुसारं च जाड्यात्मकस्याविद्याधर्मस्याप्यनुगमदर्शनेनाविद्योपादानकत्वमप्यङ्गीकरणीयतामावहत्येव। यतो हि कार्यमेकं प्रति मान्यतामर्हत्स्वपि, कारणेष्वनेकेषु कार्ये नियमेन, स्वधर्मानुगमकत्वमुपादानस्यैव कारणस्य समुपलभ्यते स्वभावः, नान्यस्य। अत एव मृददृष्टेश्वरेच्छाद्यनेककारणके घटादौ मृत्त्वाद्युपादानधर्मानुगम एवानुभवसिद्धः, न गुणत्वादेरनुपादानकारणादृष्टेश्वरेच्छादिधर्मस्यानुगमः। सति चैवं ब्रह्माविद्योभयोपादानकत्वे जगतो ब्रह्माविद्ययोर्भेदकं किं नामेति जिज्ञासायां वदन्ति ते, नन्वेवं यद् वेदान्तसिद्धान्ते न्यायवैशेषिकसिद्धान्तयोरिव साङ्ख्ययोगसिद्धान्तयोरिव वा नोपादानता किलैकविधा, किन्तु द्विविधा। एका खलु विवर्तमानतारूपा, द्वितीया च परिणममानतारूपा। तत्र प्रथमाऽभ्युपगम्यते ब्रह्मणि, न द्वितीया। द्वितीया च समभ्युपगम्यते नूनमविद्यायाम्, न ब्रह्मणि। एवं च न ब्रह्माविद्ययोरैक्यापत्त्यवकाशः स्वीयेन स्वीयेन स्वरूपेण। न च वैपरीत्यमेव कुतो न? ब्रह्मैवास्तु परिणाम्युपादानम्, अविद्यैव चास्तु विवर्तमानोपादानमिति शक्यते वक्तुम्; विवर्तमानत्वस्याध्यासाधिष्ठानत्वरूपतया तादृशाधिष्ठानत्वस्य च पारमार्थिकसत्त्वसमनियततया अपारमार्थिक्यायामविद्यायां विवर्तमानत्वरूपस्योपादानत्वस्यापादयितुमशक्यत्वात्। तथैव परिणामस्य नियमतो विकाररूपतया ब्रह्मणश्च "निरवद्यं निरञ्जनम्" इत्यादिभ्यः श्रुतिभ्यः सर्वथा निर्विकारतया परिणामित्वरूपस्योपादनत्वस्य निर्विशेषे ब्रह्मण्यापादयितुमशक्यत्वात्।

एतेन "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति श्रुत्यैकविधाया एवोपादानताया लाभेन कुतो नाविद्याब्रह्मणोरेकशेषतापत्तिरित्यपि निरस्तं वेदितव्यम्। सर्वेषु हि द्विविधव्यवहारविषयेषु तेषु तेषु जागतिकेषु सर्वथानुभूयमानस्य जाड्यसत्त्वोभयधर्मानुगमस्य तथासति प्रतिपादयितुमशक्यत्वात्। यतो वा इमानि भूतानीति श्रुतौ 'यतः' इत्यत्र तसिल्प्रत्ययस्य सार्वविभक्तिकत्वेनाभ्युपगम्यमानतया 'यतः' इत्यस्य याभ्यामित्यर्थकत्वमप्यर्हत्येवेति तु नात्र सदुत्तरम्; यत्तदोर्नित्यसम्बन्धतया 'तद्विजिज्ञासस्व' इत्यत्राविद्याया अपि तत्पदग्राह्यतापत्त्या तस्या अपि विजिज्ञास्यतापातात्। न चास्तु, तस्या अपि सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वेन स्वीयेन रूपेण ज्ञेयत्वाभ्युपगमे बाधकाभावेन विज्ञास्यतापीति वाच्यम्; 'तद्ब्रह्म' इत्यत्रापि प्रोक्ताया यत्तदोर्नित्यसम्बन्धताया बलेन तत्पदग्राह्यतापत्त्या, तत्र च ब्रह्मत्वाभावेन बाधापत्तेरपरिहार्यत्वात्। तथात्र पदार्थतत्त्वनिर्णयकारमते जगदाकारेण परिणममानत्वरूपस्य, जगदुपानत्वस्यैव हि, प्रोक्तयुक्तिभिरविद्यालक्षणत्वेन फलतो लब्धतया मायादिशब्दवाच्यं ब्रह्माज्ञानमेव तदविद्या, यत्खलु परिणमते जगद्रूपेणेत्यायाति सारल्येन।

अंशतः, परन्तु विप्रतिपद्यन्तेऽत्र संक्षेपशारीरिककृतः सर्वज्ञात्ममुनयः। ते हि कथयन्ति यद् ब्रह्मैव जगदुपादानम्, नाविद्या। यतो हि नोपादानत्वद्वित्वे समुपलभ्यते किञ्चित् तथाविधं प्रमाणम्; परन्तु कपालतन्त्वादेर्घटपटाद्युपादानत्वमिव ब्रह्मणः साक्षाज्जगदुपादानत्वाभ्युपगमे ब्रह्मणः सविकारत्वापत्तिर्भीतिरिति सद्वारकतया ब्रह्मणि जगदुपादानता मान्या। तदेव च द्वारं मायाऽविद्यादिशब्दवाच्यं वाच्यम्। द्वारत्वञ्च तस्यां तदध्यस्तत्वे सति तद्विवर्तपरिणामित्वरूपमवगन्तव्यम्। ब्रह्मण्यनाद्यध्यस्ता मायापरपर्यायाऽविद्या, भवत्येव ब्रह्मविवर्तजगत्परिणामिनीति तत्र सुलभा द्वारत्वसम्पत्तिः। तथा चैवमवान्तरविप्रतिपत्तिसत्त्वेऽपि तद्ब्रह्माज्ञानमेवाविद्या; इत्थं जगदेतद्यस्य परिणाम इत्यत्र विषये मुख्ये, न लेशतोऽपि विप्रतिपत्तिरवगम्यते सर्वज्ञात्ममुनीनामपि।

किन्तु विप्रतिपद्यन्तेऽत्र मिश्रवाचस्पतयोऽविद्याया व्यापारविधया कारणत्वाभ्युपगमांशे। ते ह्येवं कथयन्ति यदविद्यासचिवं ब्रह्म, जाड्याश्रयजगदाकारेण स्वत एव विवर्तमानतया, भवत्युपादानं जगत इति मायापरपर्यायाऽविद्या नोपादानोपादेययोर्ब्रह्मजगतोर्मध्यवर्त्तितया भजते द्वारताम्। तज्जन्यत्वे सति तज्जन्यजनकत्वमेव हि व्यापारत्वम्। न च तत्समन्वयः सम्भवी कथमप्यविद्यायामनादिभूतायाम्, किन्तु जगद्विवर्तोपादानभूतब्रह्मसाचिव्ये तस्या नावलोक्यते काचन बाधा। व्यक्तीकृतमेतत्स्वमतं मिश्रैस्तैर्भामत्यारम्भ एव—

अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।
यतश्चाभूद् विश्वं चरमचरमुच्चावचमिदं
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥

इत्येवं प्रतिपादयद्भिः। साचिव्यं च तत्तत्राविद्यायाम्, प्रोक्तं परिणामित्वरूपं शक्यत एवाभ्युपगन्तुमिति, न—

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।

इत्याचार्योदयनोक्त्यनुसारमदृष्टगतं भगवत्साचिव्यमुपाश्रित्याविद्यान्यथासिद्धिशङ्कावकाशः। प्रोक्तस्य परिणामित्वरूपस्य साचिव्यस्य नैयायिकैर्गुणत्वेनाभ्युपगम्यमानेऽदृष्टे तत्र कथमप्यभ्युपगन्तुमशक्यत्वात्। अभ्युपगम्येत चेददृष्टेऽपि परिणामित्वं गुणत्वमनभ्युपगम्य, तैस्तदा वेदान्तमतादरप्रसङ्गः। परिणामपरिणामिनोरभेदाभ्युपगमस्यानुभवसिद्धत्वेन, अविद्याऽविद्यकयोरप्यभेदस्या-

भ्युपगम्यतया, आविद्यकान्तःपातिनोऽदृष्टस्याप्यविद्यात्वाभ्युपगमेनाविद्यासाचिव्य एवादृष्टसाचिव्यस्य पर्यवसानात्। तथा च वाचस्पतिमतमिदमविद्यानिरूपणसम्बन्धे भवति नन्वत्रैवार्थे पर्यवसितम्, यद् जीवाश्रितं ब्रह्मविषयकं यदज्ञानं व्योमादिजगदाकारेण परिणमत इति कृत्वा, ब्रह्म विवर्ततामभ्युपैति, तदज्ञानमेवाविद्यामायादिपदाभिलप्यमिति।

वेदान्तसिद्धान्तमुक्तावलीकृतस्त्वत्रैवं मन्यन्ते यत् "न तस्य कार्यं करणं च विद्यते" इति ब्रह्मणः कार्यत्वकारणत्वयोरुभयोरभावादेकबलवत्तरश्रुतिसमुपलम्भाद् ब्रह्मणि वास्तविकस्य जगदुपादानत्वस्याभ्युपगमः कर्तुमशक्य एवेति मायाया एव जगदुपादानत्वमभ्युपगन्तव्यम्। न च ब्रह्मणो जगदुपादनत्वबोधिकायाः "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेरसामञ्जस्यमिति वाच्यम्; जगदाकारेण परिणममानतया जगदुपादानत्वं स्वसमसत्ताकतया तात्त्विकम्, स्वस्मिन्नावहन्त्या ब्रह्मणोऽविद्याया मायाऽज्ञानाद्यपरशब्दवाच्याया अपि त्रिकालाबाध्यत्वरूपस्य तात्त्विकत्वस्यानाश्रयतया, परमार्थसति चैतन्ये निरवच्छिन्ने ब्रह्मण्यध्यासाभ्युपगमेन, अधिष्ठानसत्तातिरिक्ताया आरोप्यसत्तायाश्चानभ्युपगमेन जगदुपादनाविद्यासत्ताऽपि फलतो ब्रह्मसत्तैवेति कृत्वा तच्छ्रुतिसामञ्जस्यस्य सम्पादयितुं शक्यत्वात्।

तथा च परिणामित्वमेव ह्युपादनत्वम्। तथाविधं च जगदुपादनत्वं जगदाकारेण परिणामिन्यामविद्यायामेव, न ब्रह्मणि; तस्य कूटस्थनित्यतया परिणमनासम्भवादिति जगदाकारेण परिणममानमायाधिष्ठानत्वरूपमौपचारिकमेवोपादानत्वं ब्रह्मण इत्यत्रैवैतन्मतपर्यवसानेनात्रापि मते यत्खल्वज्ञानं ब्रह्मविषयकं ब्रह्मण्येवाध्यस्तं भवद् जगदाकारेण परिणमते तदेवाविद्यामायादिशब्दवाच्यमिति सारल्येनाविद्यायाः स्वरूपनिरूपणं सम्पद्यते।

प्रोक्तविभिन्नमतवादानुसारमत्र विहितान्येतानि नन्वविद्यास्वरूपनिरूपणानि, "यतो वा इमानि" इत्यादिश्रुतौ "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्यंशस्यापि स्वातन्त्र्येण ब्रह्मस्वरूपनिरूपकत्वम्।

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै विद्यात्मने नमः॥

इति श्रुत्यनुसारं मायाविद्ययोर्न कश्चन भेदः, किन्तु वस्तुत ऐक्यमेवेति च समनुश्रित्य विहितानि वेदितव्यानि। अथेदानीं "येन जातानि जीवन्तीति" श्रुत्यंशस्य ब्रह्मनिरूपकत्वम्। 'जीवेशावाभासेन करोति मायाऽविद्या च स्वयमेव भवति" इति श्रुत्यनुसारं मायाऽविद्ययोश्च नैक्यम्, अपि तु भिन्नत्वमेवेति मतविशेषाश्रयणेन समुपस्थाप्यन्ते कानिचन निरूपणान्यविद्यास्वरूपस्य।

अयं भावः—यतो वा "इमानि भूतानि" इत्यादिश्रुतौ, "जन्माद्यस्य यतः" इति द्वितीय-सूत्रे च बादरायणीये, ब्रह्मणो लक्षणत्रयज्ञापकत्वं यथोच्यते विवेचकैस्तैस्तैरुत्पत्तिस्थित्यत्ययानुपादाय जगतः, तथा जगदुत्पत्तिस्थित्यत्ययानुपादायाविद्याया अपि लक्षणत्रयं शक्यसम्पादम्। तत्रैतावदन्तं विहितमविद्यानिरूपणं जगदुत्पत्तिमादाय विहितं वेदितव्यम्। जगत्स्थितिमादाय समुपस्थाप्यन्त इदानीं कानिचनाविद्यास्वरूपनिरूपणानीति।

बिम्बभूतस्य चितो ब्रह्मणो यस्यामनाद्यनिर्वाच्यायां भूतप्रकृतौ आवरणशक्तिरहितायां सम्पद्यमानः प्रतिबिम्बो भवतीश्वरः सा माया; येषु चावरणविक्षेपशक्तिसहितेषु परिच्छिन्नेष्वनन्तेषु तत्प्रदेशेषु सम्पद्यमानाः चिदात्मकस्य बिम्बस्य प्रतिबिम्बा भवन्ति जीवास्ते मायाप्रदेशा भवन्त्यविद्याः।

इदं च निरूपणमविद्याया जीवनानात्ववादमभ्युपगम्य। यदि चैकजीववादमुपगम्य मायाऽविद्याभेदवादं चेष्यते तयोः स्वरूपनिरूणं तदा "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इति श्रुत्यनुसारं जगत्परिणामपरिणामिनोऽज्ञानस्य सत्त्वरजस्तमोगुणत्रयरूपतां गुणेषु च तेषु गुणप्रधानभावमुपमर्द्योपमर्दकभावं चाभ्युपगम्य, रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधाने यस्मिन्नज्ञाने चिदात्मनो ब्रह्मणः सम्पद्यमानः प्रतिबिम्बो भवतीश्वरस्तदज्ञानं माया; यस्मिंश्च रजस्तमोऽभिभूतमलिनसत्त्वप्रधानेऽज्ञाने चिदात्मनो ब्रह्मणः सम्पद्यमानः प्रतिबिम्बो भवति जीवस्तदज्ञानं भवत्यविद्येत्येवमपि शक्यते निरूपयितुं स्वरूपमविद्यायाः।

एतानि खलु निरूपणानि यथा बिम्बप्रतिबिम्बवादाश्रयेणेदानीमत्र विहितानि तथावच्छेदवादाश्रयेणापि साधु शक्यान्येव विधातुम्।

एवमेव जीवेश्वरयोरुभयोरज्ञानोपाधिकत्वाविशेषेऽपि विषये कस्मिंश्चिदपि 'न जानाम्यहम्' इत्यनुभवोऽल्पज्ञस्य जीवस्यैव भवति, न जातुचित् सर्वज्ञस्येश्वरस्यापीति कृत्वा भगवदुपाधिभूतमज्ञानं केवलं विक्षेपशक्तिमदेव भवति, नावरणशक्तिमत्; जीवोपाधिभूतं त्वज्ञानं तदेवावरणविक्षेपोभयशक्तिमद्भवतीत्येवमभ्युपेयते तदाऽऽवरणविक्षेपोभयशक्तिमदज्ञानमविद्येति भवत्यविद्यास्वरूपनिरूपणम्।

नन्वविद्यास्वरूपनिरूपणान्येतानि जगतः स्थितिमभिलक्ष्य भवन्ति विहितानीति यदुक्तं कथं तत्सङ्गच्छत इति चेदित्थम्—भेदकल्पनाधीनो हि जीवेश्वरभावः, न कथमपि सम्भवी पितृपुत्रभावादिवज्जगदस्थितौ। निरूपणानि चैतानि विहितान्यविद्यायाः सर्वाणि नूनं जीवेश्वर-

भावाभ्युपगमाश्रितान्येवेति साधु सम्पद्यते निरूपणानामेतेषामविद्याविषयकाणां जगत्स्थिति-मूलकत्वमिति ।

अथेदमवशिष्यते जगदत्ययानुसारि निरूपणं तावदविद्याया इति तदुपस्थाप्यते पुरतो विपश्चिदपश्चिमानाम् ।

यो हि भावोऽनादिः सन्नपि ज्ञाननिवर्त्यो भवति स एवाज्ञानम् । तदेव चाज्ञानमविद्येति भवत्येवमपि निरूपणमविद्यायाः । जगत्प्रवाहस्यानादितया जगदात्मकपरिणामपरिणामिनोऽ-ज्ञानस्याप्यनादित्वं मन्तव्यमेव । नन्वेवमनादित्वसिद्धावप्यज्ञानस्य भावरूपत्वमनुपपाद्यमेव, तस्य ज्ञानाभावरूपतोपपत्तेः । अयं भावः—अघटं भूतलमिति प्रतीतिस्थले यथा भूतले धर्मिणि वर्तमानतया घटाभाव एव विषयतामावहति, न भावात्मकः कश्चनाघटपदार्थः, तथा 'अज्ञोऽहम्' इत्यत्रापि खल्वात्मधर्मिको ज्ञानाभाव एव विषयत्वमावहति, न कश्चनाज्ञानात्मको भावपदार्थ इति स्वीकारस्यैवौचित्येन नाज्ञानस्य भावरूपत्वमिति नोक्ताज्ञाननिरुक्तिसमन्वयो भवत्यज्ञान इति चेन्मैवम् ; दृष्टान्तदार्ष्टान्तिकयोरतिवैषम्यात्, एवमभिधानस्य यौक्तिकत्वानुपपत्तेः ।

अस्यायमभिप्रायः---अघटं भूतलमिति प्रतीतिस्थले नहि घटवत्तया प्रतीयमानं भूतलं प्रत्येतव्यं भवति, घटाभावधर्मितयेति विरोधिनो घटप्रकारकस्य भूतलविशेष्यकस्य ज्ञानस्याभावेन बाधाभावात्; भवतु नाम घटाभावस्य विषयताप्रकारतात्मिका, किन्त्वज्ञोऽहमित्यत्रात्मानं जानतैव जनेनाज्ञानस्य स्वप्रकारतया विषयीकरणस्य वाच्यतया तद्वत्तयाभासमाने धर्मिणि तद-भाववत्ताज्ञानस्यानाहार्यस्य न सम्पादयितुमर्हा भवनयोग्यता कथमपि । अज्ञोऽहमिति प्रत्ययस्य ज्ञानाभावविषयकत्वं प्रतिपादयताऽपि नापलपितुं शक्यः कथञ्चिदपि समानधर्मिकयोस्तत्तद-भावज्ञानयोः प्रतिबन्ध्यप्रतिबन्धकभावो बाधमुद्रया । न खल्वात्मानमजानन्नेव जानात्यज्ञोऽह-मिति युक्तं स्वीकर्तुम्, अनुभवविरुद्धत्वात् । अतो नाज्ञोऽहमित्यत्राज्ञानस्य ज्ञानाभावरूपत्वं शक्यं वक्तुमिति स्वीकर्तव्येऽवश्यं तस्याभाववैलक्षण्येन भावरूपता वक्तुं सुशक्यैवेति ।

न च ज्ञानाज्ञानयोरुभयोर्भावत्वाभ्युपगमे तयोर्विरोधाभावेन ज्ञानानिवर्त्यतया कथं तत्र ज्ञाननिवर्त्यत्वांशोपपत्तिरिति वाच्यम् ? सत्यपि भावत्वेनाविशेषे गोत्वाश्वत्वयोरिव तयोर्विरोधस्य साधु वक्तुं शक्यतयाऽज्ञानस्य ज्ञाननिवर्त्यत्वोपपत्तेः । अत्र ज्ञानाज्ञानयोरुभयोर्विषयतया ब्रह्मण एव विवक्षितत्वेन न वेदान्तसिद्धान्तेऽप्यज्ञोऽहमिति प्रतीत्यनुपपत्त्यवकाशः । किञ्च, वेदान्तसिद्धान्ते ज्ञानाज्ञानयोरुभयोरपि साक्षिभास्यतया न तथा प्रतीतौ बाधकं किञ्चिदिति, तथा च—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति श्रुत्यनुसारं हृदयग्रन्थिशब्दबोध्याया अविद्याया ब्रह्मसाक्षात्कारनाश्यत्वस्यावश्यमभ्युपेयतया पूर्वोक्तानादित्वभावत्वयोरिव ज्ञाननिवर्त्यत्वस्याप्यज्ञानाद्यपरपर्यायामविद्यायामक्षुण्णतया अनादित्वे भावत्वे च सति ज्ञाननिवर्त्यत्वमविद्यात्वमिति पर्यवसितस्याविद्यालक्षणस्य स्वलक्ष्यभूतायामविद्यायां साधु समन्वयेन सूपपद्यते निरुक्तिरियमविद्याया यत् "यो हि भावोऽनादिः सन्नपि ज्ञाननिवर्त्यो भवति स एवाज्ञानम्, तदेव चाविद्या" इति।

अविद्यानिरूपणेऽत्रानादित्वानुक्तौ योग्यविभुविशेषगुणानां स्वाव्यवहितोत्तरतथाविधगुणनाश्यत्वमिति वैशेषिकसिद्धान्तानुसारं किञ्चिद् ज्ञानाव्यवहितपूर्ववर्तिनि ज्ञानेच्छाप्रयत्नादावतिव्याप्तिशङ्कासमापततीति तदुक्तिः। तथोक्तौ च किञ्चिद् ज्ञानाव्यवहितपूर्वक्षणोत्पन्नानां ज्ञानेच्छाप्रयत्नादीनां तेषां प्रोक्तविधया ज्ञाननिवर्त्यत्वेऽपि सादितयाऽनादित्वाभावेन न प्रोक्तातिव्याप्त्यापत्तिसमवकाशः। भावत्वानुक्तौ तु प्रागभावानां नियमतस्स्वप्रतियोगिनिवर्त्यत्वनियमेनानादित्वनियमेन च 'अनादित्वे सति ज्ञाननिवर्त्यत्व'रूपस्याविद्यालक्षणस्य ज्ञानप्रागभावेति व्याप्तिरिति तद्वारणायाविद्यालक्षणे भावत्वप्रक्षेपोऽवसेयः। ज्ञाननिवर्त्यत्वांशं परित्यज्य अनादित्वे सति भावत्वमात्रस्याविद्यालक्षणत्वोक्तौ वाऽऽत्मन्यतिव्याप्तिः, तस्याप्यनादिभावत्वात्। ज्ञाननिवर्त्यत्वांशस्यापि निवेशे चात्मनः सामान्यत एव किञ्चिदनिवर्त्यतया ज्ञाननिवर्त्यत्वस्यापि तत्राभावेन नाविद्यालक्षणस्य तत्रातिव्याप्त्यवकाशः। अत एव प्रत्यक्तत्त्वप्रदीपिकाकाराश्चित्सुखाचार्या अप्येवमेवाहुः —

अनादिभावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञालक्षणं सम्प्रचक्षते॥ इति।

यदि कश्चिदत्रैवं ब्रूयाद्यत्—तथासति शुक्त्याद्यवच्छिन्नचैतन्यावरकेषु तेषु तेष्वज्ञानेषु सादिष्वव्याप्त्यापत्तिः, सादिशुक्त्याद्यवच्छिन्नतया चैतन्यानामपि तथाविधानां सादित्वेनाभ्युपगन्तव्यतयाऽनादित्वाभावेन तदाश्रितस्य रूप्याद्युपादानभूतस्याविद्यालक्षणलक्ष्यस्याप्यनादित्वाभावादिति, तदा तत्रैवं प्रतिवक्तव्यं यत्—घटावच्छिन्नाकाशस्थलेऽवच्छेदकभूतस्य घटस्य सादित्वेऽपि यथा नावच्छेद्यभूतस्याकाशस्य सादित्वं परैरप्यभ्युपगम्यते, तथैव शुक्त्याद्यवच्छिन्नचैतन्यस्थलेऽवच्छेदकभूतस्य शुक्त्यादेः सादित्वेऽप्यवच्छेद्यभूतस्य चैतन्यस्यानादित्वमेव मन्तव्यमिति तदाश्रितस्याज्ञानस्यापि रूप्याद्युपादानस्यानादित्वमक्षुण्णमिति न तत्राव्याप्त्यवसर इति।

(अपूर्णः)



# श्रवणमनननिदिध्यासनानां स्वरूपमुपयोगश्च

श्री पी० बी० अण्णङ्गराचार्यः, शिरोमणिः, वडताल, गुजरात ।

इह खलु सांसारिकदुरन्तानन्ततापाभितप्तानां दुरन्तदुःखदुःखिनां जनानामैकान्तिक-दुःखनिवृत्तिमभिकाङ्क्षमाणानां तत्साधनोपदेशचतुरसद्गुरुवर्यपादारविन्दपरिसरोपसदनमन्तरा नान्या गतिर्दरीदृश्यते । श्रोत्रिया ब्रह्मनिष्ठाः सद्गुरव एव हि दयार्द्रचित्ता ज्ञानार्थिभ्यः प्रपन्नेभ्यः समुपदेक्ष्यन्ति परं ज्ञानं प्रणिपातादिप्रसन्नाः सन्तः ।

प्रसङ्गतोऽत्र विचारः—संसरणं किं हेतुकम् ? सति हि निदानज्ञाने समुचिता चिकित्सा शक्यते कर्तुमिति ।

प्रेत्यभावः संसार इत्यभियुक्ताः । "पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्" इत्युक्तरीत्या आतत्त्वसाक्षात्काराद् नानायोनिषु भवति जन्म जीवात्मनां पर्यायतस्तत्तद्योनि-प्रापककर्मानुसारतः । सोऽयं प्रेत्यभावः संसारः । प्रेत्यभावशब्द एव च संसारस्यानादितां गमयति । "वीतरागजन्मादर्शनात्" इति च सूत्रम् । अनेन च यावता न वीतरागता, न तावता संसारोपरम इति ज्ञायते ।

हेतुश्च संसरणस्याविद्याकामकर्माणि । अनात्मन्यात्मबुद्धिः, अस्वकीये स्वकीयबुद्धिश्चेति द्विविधेयमविद्या कामकर्मप्रयोजिका सती कामकर्मफलभूते पाञ्चभौतिके शरीराख्ये षट्चक्रे यन्त्रे प्रक्षिप्य पीडयति भूतानीति भवत्यविद्यैव मूलं सर्वानर्थजातस्य । कामकर्मानुसारेण नानायोनि-प्राप्तिश्च श्रुता कठवल्ल्याम्—

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽभिसंयन्ति यथाकर्म यथाश्रुतम् ॥ इति ।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥ इति ।

स्मर्यते च कर्मणां सांसारिकानन्ततापहेतुता ।

विद्याऽभावलक्षणेयमविद्या पञ्चपर्वा स्मृता—तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति; अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा योगसूत्रनिर्दिष्टाश्च, निरुक्तानि पञ्चाविद्यायाः पर्वाण्येव प्रतीयन्ते समीक्षायां क्रियमाणायाम् ।

अविद्याशब्दश्चार्थत्रये प्रयुक्तोऽस्त्यध्यात्मशास्त्रेषु, अज्ञाने ज्ञानाभावान्यथाज्ञानविपरीत-ज्ञानरूपत्रिप्रकारे, त्रिगुणात्मिकायां प्रकृतौ, बन्धके कर्मणि च । "क्षरं त्वविद्या त्वमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः" इति श्रुतौ प्रकृतिर्निर्दिष्टाऽविद्याशब्देन । आत्मयाथात्म्य-प्रकाशप्रतिरोधकत्वात् स्वविषयभोग्यताबुद्ध्युपधायकत्वाज्जडरूपत्वाच्चाविद्यात्वं युक्तमेव त्रिगुणायाः प्रकृतेः । मिथ्याज्ञानरूपाविद्याकार्यत्वाद् बन्धककर्मणां विद्याविरोधित्वाच्चाविद्यात्वमुक्तम् "अविद्या कर्मसंज्ञाऽन्या" इति । मिथ्याज्ञानं त्वविद्येति स्फुटमेव । कर्मवासनाकृतः स्थूलसूक्ष्म-रूपप्रकृतिसम्बन्धश्चात्मस्वरूपतिरोधानकर इति "पराभिध्यानात्तु तिरोहितम्, ततो ह्यस्य बन्धविपर्ययौ", "देहयोगाद्वा सोऽपि" इति ब्रह्मसूत्रतोऽवगम्यते ।

तथा च सिद्धम्—मिथ्याज्ञानसकामकर्मत्रिगुणप्रकृतिलक्षणा अविद्या संसरणहेतुरिति ।

अविद्यामूलत्वात् संसारस्य तन्निवृत्तिरविद्यानिवृत्त्यैव भवितुमर्हति । कारणाभावाद्धि कार्याभावः । तथा च काणादसूत्रम् । अविद्यानिवृत्तिश्च विद्ययैवेति विद्यैव संसरणरोग-तापात्यन्तिकप्रतीकार इति नास्त्यस्मिन् विषये विवादो वादिनां केषाञ्चिदपि दार्शनिकानाम् । उक्तं च भगवतैव उद्धवं निजभक्ताग्रण्यं प्रति—

विद्याऽविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ।
बन्धमोक्षकरे ह्याद्ये मायया मे विनिर्मिते ॥
एकस्यैव ममांशस्य जीवस्यैव महामते ।
बन्धोऽस्याविद्ययाऽनादिर्विद्ययैव विमुच्यते ॥ इति ।

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति चाक्ष-पादीयं दर्शनम् । अत्र सूत्रे निर्दिष्टस्योत्तरोत्तरस्य तदनन्तरं प्रति हेतुत्वम् । कारणनिवृत्त्या च कार्यनिवृत्तिः । तथा च तत्त्वज्ञानाद् मिथ्याज्ञानस्य निवृत्तिः । तस्य निवृत्त्या रागद्वेषलक्षणस्य दोषस्य निवृत्तिः । तस्य निवृत्त्या शुभाशुभलक्षणप्रवृत्तेर्निवृत्तिः । प्रवृत्तेर्निवृत्तौ जन्मनिवृत्तिः । जन्मनिवृत्तौ च भाविनी दुःखनिवृत्तिरात्यन्तिकीति यावत् । सञ्चितानां कर्मणां ज्ञानाग्निना भस्मीभावः क्रियमाणानां चाश्लेषो विद्यामाहात्म्यात्, प्रारब्धानां तु भोगेन क्षयः । प्रारब्ध-भोगक्षये च पुनः कर्मानारम्भादशरीरत्वलक्षणोऽपवर्गः सिद्ध्यतीति फलितम् ।

यदविज्ञानात् संसारः, तद्विज्ञानादेव संसारनिवृत्तिः। आत्मतत्त्वाज्ञानाच्च संसारः, अत आत्मतत्त्वविज्ञानादपवर्ग इति स्थितिः। असङ्कोचेनात्मपरमात्मोभयविजयमेवाज्ञानमविद्याशब्दितं संसरणहेतुरिति त्रय्यन्तवृद्धानां मतम्।

श्रुतं चात्मविज्ञानस्य सांसारिकशोकार्णवतारकत्वम्—"तरति शोकमात्मवित्" इति। दुरधिगमत्वादात्मतत्त्वविज्ञानस्य गुरूपदेशत एव ज्ञातव्यमात्मतत्त्वमिति च श्रूयते—"नैषा तर्केण मतिरापनीया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ"; "अनन्यप्रोक्ते गतिरत्र नास्ति ह्यणीयान् ह्यतर्क्यमणुप्रमाणात्" इति। ततश्च सिद्धं गुरुमुखतः प्रथममेव वेदान्तानां परमतात्पर्यविषयार्थश्रवणं कार्यं मुमुक्षुभिरिति। तदिदं श्रूयते—"श्रोतव्यः" इति।

जीवात्मनि परमात्मनि चास्ति प्रयुक्त आत्मशब्दोऽध्यात्मशास्त्रेषु। तत्र च स्वात्मनो याथात्म्यं देहेन्द्रियमनःप्राणबुद्धिविलक्षणत्वं ज्ञानानन्दमयत्वं परमात्मकत्वं च। अतः स्वात्मयाथात्म्यज्ञानमेव परमात्मज्ञानमाक्षिपतीति सामान्यत उक्तं मोक्षसाधनमात्मज्ञानं स्वात्मपरमात्मोभयविषयकमेव मन्तव्यम्। श्रुतिश्च "द्वे ब्रह्मणी वेदितव्ये" इति। ब्रह्मणी जीवात्मपरमात्मानौ इति न्यायाचार्याः। आत्मानं देहादिविलक्षणं परमात्मांशत्वात् परमात्मात्मकं यथावद्विज्ञायात्मनामात्मभूतस्य परमात्मन उपासनमेव क्रियमाणमलं भवति सांसारिकशोकनिवृत्त्यै इति च कठश्रुतौ श्रूयते—"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति।

जीवात्मनामंशत्वं परमात्मनोंऽशित्वं च श्रुतिस्मृतिसूत्रसिद्धम्। तदंशी परमात्मैव मुख्य आत्मा, तद्विज्ञानमेव मुख्यं मोक्षसाधनमिति बोध्यम्। तथा च मुण्डके श्रूयते—"तमेवैकं जानथात्मानमन्या वाचा विमुञ्चथ, अमृतस्यैष सेतुः" इति। बृहदारण्यके च—

विरजः पर आकाशादज आत्मा महान् ध्रुवः।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः॥
नानुध्यायेद् बहून् शब्दान् वाचो विग्लापनं हि तत्।

इति श्रुतम्।

अत्र विज्ञायेति श्रवणमननसंपादितं सुप्रतिष्ठितमात्मतत्त्वज्ञानमनूद्य प्रज्ञां कुर्वीत इति श्रवणमननानन्तरं भाव्युपासनं विहितम्।

मैत्रेयीब्राह्मणे च—"येनाहं नामृता स्याम्, किमहं तेन कुर्याम्; यदेव भगवान् वेद तदेव मे ब्रवीतु" इति मैत्रेय्या पृष्टो याज्ञवल्क्यः—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्युपदिष्टवान्। स्मर्यते च—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ध्याननिर्मथनाभ्यासात् परमात्मा प्रकाशते ॥ इति ।

अत्र चात्मदर्शनसाधनानि निर्दिष्टानि नाम श्रवणमनननिदिध्यासनानि । तेषां स्वरूपं विवेचयामोऽत्र समासतः ।

## अद्वैतमतप्रक्रियया श्रवणादेः स्वरूपमुपयोगश्च

वेदान्तपरिभाषायां तावच्छ्रवणादीनां निर्दिष्टानि लक्षणानि । यथा—श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया । मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसव्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलो मानसो व्यापारः । दर्शनं त्वात्मतत्त्वसाक्षात्कारः ।

श्रीभाष्ये लघुपूर्वपक्षे चाद्वैतमतप्रक्रियया श्रवणादीनां स्वरूपमुपवर्णितम् । यथा— "अयमात्मा ब्रह्म, तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादेवाविद्या निवर्तते । वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम वेदान्तवाक्यान्यात्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टार्थस्य स्वात्मन्येवमेवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यार्थस्यानवरतभावना निदिध्यासनम् । एवं श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति ।

श्रवणादीनामुपयोगोऽपि संसूचित एव वर्ततेऽत्र । निर्विशेषस्वप्रकाशचिन्मात्रब्रह्मात्मैक्ये वेदान्तानां तात्पर्यमिति श्रवणतो ज्ञात्वा उक्तेऽर्थे मानान्तरयुक्त्यन्तरविरोधशङ्कां मननतो निरस्य चिररूढमूलां भेदवासनाम् 'अहं ब्रह्मास्मि' इत्यभेदभावनाप्रकर्षेण निदिध्यासनाभ्यासदार्ढ्यनिष्पन्नेन दूरीकृत्य तत्त्वमसीति वाक्यं पुनरनुसन्दधानो वाक्यादेव ब्रह्मात्मैक्यसाक्षात्कारं विशदं प्राप्य निवृत्ताविद्यो जीवन्मुक्तो भवतीति निरूपितमेतावताऽद्वैतिसिद्धान्तानुसारतः ।

अनादिभेदवासनायाः प्रत्यक्षमूलायाः प्रतिबन्धिकायाः सत्त्वात् प्रथमत एव तत्त्वमसिवाक्यं नाविद्यानिवर्तकं ज्ञानं जनयितुमलम्, किन्तु श्रवणमनननिदिध्यासनैर्निरस्तायां भेदवासनायां तदेव वाक्यमविद्यानिवर्तकमपरोक्षज्ञानं जनयतीत्यद्वैताचार्याणामाशयः । तत्र पद्मपादाचार्यादयस्तत्त्वमसिवाक्यादेवापरोक्षरूपं ब्रह्मात्मैक्यज्ञानं जायत इत्याहुः ।

मानान्तरस्याप्रसरात् परोक्षेण भ्रमाक्षयात् ।
सहकारिविधानाच्च शब्दादप्यपरोक्षधीः ॥

इति च वेदान्तसिद्धान्तसूक्तिमञ्जर्याम् । तत्त्वमसिवाक्येनापरोक्षजनने श्रवणमनननिदिध्यासनानि सहकारीणि इति बहवः । श्रवणमेव प्रधानं कारणम् । मनननिदिध्यासने सह कुरुत इति विवरणकाराः ।

भामतीकारास्तु श्रवणमनननानन्तरभाविध्यानयोगसंस्कृतं मन एव ब्रह्मात्मैक्यसाक्षात्कारे कारणम् । "ततस्तु तं पश्यति निष्कलं ध्यायमानः", "मनसा तु विशुद्धेन" इत्यादिश्रुतेः,

यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥

इत्यादि; "स्मृतेः, अपि संराधने प्रत्यक्षानुमानाभ्याम्" इति सूत्राच्चेत्याहुः । उक्तं च—

अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा ।
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परः ॥ इति ।

( इत्यद्वैतदृष्ट्या श्रवणादेः स्वरूपोपयोगवर्णनम् )

## विशिष्टाद्वैतसिद्धान्तप्रक्रियया श्रवणादेरुपयोगः

अथ विशिष्टाद्वैतमतेन श्रवणादेः स्वरूपमुपयोगश्च वर्ण्यते—"द्वे विद्ये वेदितव्ये परा चैवापरा च" इति परापरयोर्विद्ययोः सम्पाद्यत्वमुच्यते । "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथा स्मृतम् ॥" इति च स्मर्यते । तत्रागमजन्यं परोक्षज्ञानमपरा विद्या, विवेकादिसाधनसप्तकजन्यं दर्शनपर्यवसायिनिदिध्यासनं परा विद्येति विवेकः । दर्शनपर्यन्तस्य निदिध्यासनस्य साक्षात्परब्रह्मप्राप्तिसाधनस्य परविद्याशब्दितस्य श्रवणमननसाध्यत्वात् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रवणादिकं विहितमस्ति ।

श्रवणं नाम मीमांसाप्रतिपाद्यवाक्यतर्कलक्षणन्यायसहकृतैर्वेदवेदान्तवाक्यैस्तात्पर्यविषयभूतानामर्थविशेषाणां ज्ञानसम्पादनं गुरुमुखतः । पुस्तकनिरीक्षणेन केवलतर्केण वा वेदार्थावगमो दुरधिगम इति श्रवणमवश्यमेव कार्यम् । श्रवणगृहीतस्य स्वाध्यायार्थस्य श्रुत्यविरोधिनीभिर्युक्तिभिरिदमित्थमेवेति प्रतिष्ठापनमात्मनि मननम् ।

श्रुतोऽपि ह्यर्थोऽमतो विस्मृतोऽश्रुत इव भवति ।

श्रवणमननयोरपि केचन विधिं मन्यन्ते । अधीतसाङ्गसशिरस्कवेदस्य व्युत्पन्नस्य वेदेषु प्रयोजनवदर्थावबोधनदर्शनात्तदर्थनिर्णयार्थं रागत एव हि श्रवणे प्रवृत्तिः सम्भवदुदया । तद् रागप्राप्ते श्रवणे श्रोतव्यः' इति विधिवद्वचनं तत्र प्रोत्साहजननाय भवति । श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः । असम्भावनाविपरीतसम्भावनानिरसनं च श्रुतार्थेषु मननस्य फलम् ।

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

इति तु न्यायाचार्योदयनाः ।

सन्तोषार्थं विमृशति मुहुः सद्भिरध्यात्मविद्याम् ।

इति च श्रीमद्वेङ्कटनाथार्याः । असकृदध्यात्मविद्याविमर्शश्च मननरूप एव हि ।

न च श्रवणमननाभ्यां स्वाध्यायार्थप्रवचनादिनैव कृतकृत्यता, किन्तु दर्शनपर्यन्तं निदिध्यासनमेव संसारबन्धविनिवर्तनार्थं कर्तव्यमिति विधीयते श्रवणमनने अनूद्य निदिध्यासितव्यः, इति निदिध्यासनम् । श्रोतव्य इति सद्गुरूपसदनविधिः, मन्तव्य इति चालम्भनसंशीलनविधिरिति केषाञ्चिन्मतम् , परन्तु तयोर्वाक्यान्तरत एव विहितत्वाद् यथानिरूपिते एव श्रवणमनने युक्ते अभ्युपगन्तुम् ।

निदिध्यासनशब्दविपक्षितं च ध्यानम् । तच्च विजातीयप्रत्ययान्तराव्यवहिताविच्छिन्नाधारध्येयार्थगोचरस्मृतिसन्तानात्मकम् । उक्तं च ध्यानस्य लक्षणं श्रीविष्णुपुराणे—

तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तदा ॥ इति ।

अन्यनिस्पृहा इति विशेषणेन स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया स्मृतिसन्ततिरेव ध्यानमिति गम्यते । सैव भक्तिः । "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति निर्वचनबलात् ।

योगदर्शने च लक्षणमुक्तं ध्यानस्य "तत्र प्रत्ययैकतानता ध्यानम्" इति । ध्यानमेव पुनः पुनरभ्यस्यमानं भावनाप्रकर्षाद्ध्येयार्थविशदावभासरूपं ग्रहणग्रहीतृभेदभानरहितं ग्राह्यैकाकारतया भासमानं समाधिरित्युच्यते । उक्तं च समाधेर्लक्षणम्—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति । मुण्डकोपनिषदि च—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥

इति मन्त्रे समाधिलक्षणा ध्यानस्थितिरस्ति वर्णिता ।

भूमविद्याया मन्त्रे सनत्कुमारेण नारदायोपदिष्टम्—"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परापरे ॥

इति श्रुतौ च प्रकृष्टध्यानपर्यन्तजन्मनः परमात्मसाक्षात्कारस्य बन्धनकारिसर्वविधग्रन्थिभेदकत्वं श्रुतम् । ध्रुवानुस्मृतेर्हृदयग्रन्थिभेदकत्वं दर्शनद्वारकमिति केचित् । दर्शनसमानाकारा ध्रुवानुस्मृतिरेव तथेति परे ।

सिद्धमेतावता अविद्याकामकर्ममूलप्रकृतिबन्धनिवृत्त्यर्थं श्रवणमनननिदिध्यासनदर्शनानां सम्पादनमवश्यमेव कर्तव्यं मुमुक्षुभिरिति ।

## श्रवणादिनिरूपणप्रयोजनोपसंहारः

निरूपितानां श्रवणमनननिदिध्यासनदर्शनानां प्रधानं प्रयोजनं च सत्यशब्दवाच्यपरब्रह्मोपासनाबललब्धं मुख्यमतिवादित्वमेव भूमविद्योक्तरीत्येति बोध्यम् । स्वोपास्यपुरुषार्थाधिक्यवादित्वमतिवादित्वम् । अपरिच्छिन्नसुखरूपस्य भूमशब्दितस्य सत्यसत्यस्य परस्य ब्रह्मण एवातिशयितपुरुषार्थत्वात् तदुपासकस्य तदधिगमेनाञ्जसैवातिवादित्वमुपपद्यतेतराम् । अत एव "एष तु वा अतिवदति यः सत्येनातिवदति" इति प्राणशब्दवाच्यप्रत्यगात्मोपासकापेक्षया मुख्यमतिवादित्वं सत्यशब्दवाच्यब्रह्मोपासकस्यैवेति सनत्कुमारोपदिष्टमाकर्ण्य सत्येनातिवादित्वं स्वात्मनोऽभिलषितवान् नारदः "सोऽहं भगवः सत्येनातिवदानि" इति । तदर्थम् "सत्यं त्वेव विजिज्ञासितव्यम्" इति च परब्रह्मोपासनं प्रस्तुतवान् भगवान् सनत्कुमार इति कृतं विस्तरेण ॥



# जैनदर्शनदृष्ट्या कर्मविमर्शः

श्री-अमृतलालजैनः, जैनदर्शनविभागाध्यक्षः, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी।

नमो वाक्

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे[1] ॥

[2]चतुरशीतिलक्षयोनिसङ्कुलायां जन्मजरामरणाधिव्याधिदारिद्र्यारिभीतिसम्भृतायामस्यां संसृतौ को नाम सुखी ? न कश्चनापि; यतो हि निराकुलतायां सत्यामेव सुखं सम्भाव्यते, परमत्र सर्वत्रापि सा सर्वथा दुर्लभैव। लब्धविविधविधसाधनो धनकुबेरो यद्यप्यधनैः 'सुखी' इत्यनुमीयते, परं सोऽपि नितरां दुःखी भवति। धनिकस्तृष्णाग्निनाऽधनश्च दारिद्र्यवह्निना सन्ततं दन्दह्यमानः क्लिश्यति। सर्वेषामपि संसारिणां सम्मिलितं सुखं परमाणूपमं दुःखञ्च सुमेरूपमम्। अत्र न मनागपि संशयः। एकस्यामेव शिक्षासंस्थायामेकस्यैवाध्यापकस्याभ्याशेऽभ्यस्यन्तो नाना सहाध्यायिनो न समानमेव फलं लभन्ते। दृष्टिमतामपि समेषां पुंसां दृष्टिशक्तिर्विचारसरणिश्च न तुल्यरूपा भवति। समाने सुखसाधने सत्यपि नहि समानमेव सुखं समासाद्यते। पुत्रे सति कश्चन सुखी भवति कश्चन च दुःखी। वशंवद एव पुत्रः सुखहेतुः, नावशंवदः। एककुलोत्पन्नयोरपि सहोदरयोरेकः सद्वृत्तः श्रद्धालुश्च जायते; एकश्चासद्वृत्तोऽश्रद्धालुश्च। दीर्घजीवनस्यानेकेषु सुलभेषु साधनेषु सत्स्वपि न समेऽपि पुमांसः समायुष्का विलोक्यन्ते। केचन दीर्घजीवनमिच्छन्तोऽपि मङ्क्षु म्रियन्ते, केचन च मृत्युमभिलषन्तोऽपि चिरं जीवन्ति; केचित् सुभगाः सुस्वरा गौराश्च जायन्ते, केचिच्च दुर्भगा दुःस्वराः कृष्णाश्च; केचन कुलीनाः, केचन चाकुलीनाः सञ्जायन्ते। अमृतायमाने भोजने सुलभेऽपि केचन मुद्गसूपमेव पातुमर्हन्ति, केचन चोद्दीप्तजठरानला अपि

---

१. नीतिशतके ९५।

२. नित्यनिगोतानां सप्त शतसहस्राणि, अनित्यनिगोतानां च सप्त शतसहस्राणि, पृथिव्यप्तेजोवायूनां सप्त सप्त शतसहस्राणि, वनस्पतिकायानां दश शतसहस्राणि, विकलेन्द्रियाणां षट् शतसहस्राणि, देवनारकपञ्चेन्द्रियतिरश्चां प्रत्येकं चत्वारि शतसहस्राणि, मनुष्याणां चतुर्दश शतसहस्राणि। तान्येतानि समुदितानि चतुरशीतिशतसहस्राण्याख्यायन्ते" तत्त्वार्थवार्त्तिके २-३२।

कदन्नमपि कृच्छ्रत आप्नुवन्ति । केचित् स्वल्पीयसा प्रयत्नेन भूरि धनं लभन्ते, केचन च महीयसापि प्रयत्नेन स्वल्पीयोऽपि धनं न लभन्ते । कोऽत्र हेतुः ? कर्म ।

### तत्स्वरूपम्

येन प्राणिनः पराधीनाः क्रियन्ते तत्कर्म । जगति द्विविधाः पदार्थाः सन्ति—चेतना अचेतनाश्चेति । अचेतनाः पञ्चधा भिद्यन्ते पुद्गल-धर्म-अधर्म-आकाश-कालभेदात् । एषु च पुद्गलास्त्रयोविंशतिप्रकारकाः[१] सन्ति, येषु कार्मणवर्गणा अपि गण्यन्ते, याः सर्वत्र व्याप्ताः । किञ्चिदपि कुर्वाणानां नराणामन्येषां वा प्राणभृतां मनोवचःकाया अपि व्याप्रियन्ते, अन्यथा तत्पूर्तिः कथं सम्पद्येत ? तद्व्यापारश्चावश्यमेव रागद्वेषमूलको भवति । तस्मिंश्च व्यापारे सत्यवश्यमेव कार्मणवर्गणा आयान्ति, जीवेन बध्यन्ते च । यथा भाजनविशेषे निक्षिप्तानि नानावस्तूनि मदिराभावं भजन्ते, तथा कार्मणवर्गणा अपि योगकषायवशादात्मना संयुज्य कर्मरूपतां धारयन्ति ।

### तद्बन्धः

आत्मकर्मणोरन्योन्यप्रदेशानुप्रवेशात्मको बन्धः । तद्धेतुश्च योगः कषायश्च । यद्यपि मिथ्यादर्शनाविरतिप्रमादा अपि बन्धहेतवः सन्ति, किन्तु त्रयोऽप्येते कषायेऽन्तर्भवितुमर्हन्ति, ततः समासतो द्वावेव बन्धहेतू भवतः । योगतः प्रकृतिप्रदेशबन्धौ कषायतश्च स्थित्यनुभागबन्धौ भवतः । तदुक्तम्—

[२]पयडिट्ठिदिअणुभागप्पदेशभेदादु चदुविधो बन्धो ।
जोगा पयडिपदेसा ठिदिअणुभागा कसायदो होंति ॥

ननु कार्मणवर्गणाः पौद्गलिकत्वाद् मूर्ता आत्मा चामूर्तः । तत्कथं बन्धः स्यात् ? किमाकाशं रज्वा बध्यते ? इति चेत्, सत्यम् ; किन्तु संसारी जीवः ( आत्मा ) कर्मबन्धापेक्षया मूर्तोऽप्यभ्युपगम्यते । तदुक्तं नेमिचन्द्राचार्यैः—

---

१. अणुसंखासंखेज्जाणंता य अगेज्जगेहि अंतरिया ।
आहारतेजभासामणकम्मइया धुवक्खंधा ॥
सांतरणिरंतरेण य सुण्णा पत्तेयदेहधुवसुण्णा ।
बादरणिगोदसुण्णा सुहुमणिगोदा णभो महक्खंधा ॥
( गोम्मटसारजीवकाण्डे ५९४-९५ )

२. द्रव्यसङ्ग्रहे ३३ ।

वण्ण रस पंच गंधा दो फासा अट्ठ णिच्छया जीवे ।
णी संति अमुत्ति तदो ववहारा मुत्ति बंधादो[1] ॥

अर्थात् पञ्च वर्णाः, पञ्च रसाः, द्वौ गन्धौ, अष्टौ स्पर्शाश्च निश्चयतो जीवे न सन्ति, ततः सोऽमूर्तः, अनादिकालतः कर्मबन्धयुक्तत्वाच्च व्यवहारतो मूर्तः ।

ननु जीवो बन्धवान्—इत्यत्र किं प्रमाणम् ? उच्यते, परतन्त्रतैवात्र प्रमाणम् । यदाह विद्यानन्दः—

'विवादाध्यासितः संसारी बन्धवान्[2] परतन्त्रत्वात्, आलानस्तम्भगतहस्तिवत् । परतन्त्रोऽसौ हीनस्थानपरिग्रहवत्त्वात्, कामोद्रेकपरतन्त्रवेश्यागृहपरिग्रहवच्छ्रोत्रियब्राह्मणवत् । हीनस्थानं हि शरीरम्, आत्मनो दुःखहेतुत्वात् कस्यचित् कारागृहवत् । ननु देवशरीरस्य दुःखहेतुत्वाभावात् पक्षाव्यापको हेतुरिति चेत्, न; तस्यापि मरणे दुःखहेतुत्वसिद्धेः, पक्षव्यापकत्वव्यवस्थापनात् ।"

## तद्भेदाः

स च कर्मबन्धो द्विविधः—भावबन्धो द्रव्यबन्धश्चेति । येन भावेन कर्म बध्यते स भावबन्धः, कर्मात्मप्रदेशानामन्योन्यप्रवेशो द्रव्यबन्धः । यदाह नेमिचन्द्रः —

बज्झदि कम्मं जेण दु चेदणभावेण भावबंधो सो ।
कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो[3] ॥

तत्र द्रव्यबन्धश्चतुर्विधः—प्रकृतिबन्धः, स्थितिबन्धः, अनुभागबन्धः, प्रदेशबन्धश्चेति ।

## प्रकृतिबन्धः

एकरसमपि वृष्ट्यम्बु यथा वृष्टिस्थानानुसारं नानारसान् समाश्रयति तथा कार्मणवर्गणा एकस्वभावा अपि कर्मभावमाश्रित्य नानास्वभावा भवन्ति । यथा निम्बस्य स्वभावस्तिक्तता, मरीचेः कटुता, गुडस्य मधुरता भवति, तथा ज्ञानावरणस्य स्वभावोऽर्थानवगमः, दर्शनावरणस्यार्थानामनवलोकनम्, वेदनीयस्य सुखदुःखानुभवनम्, मोहनीयस्य श्रद्धां सदाचारं च प्रत्यनभिरुचिः, आयुषः प्राप्ते भवेऽवस्थानम्, नाम्नः सुभगदुर्भगशरीरनिर्माणम्, गोत्रस्य कुलीनाकुलीनव्यवहारोऽन्तरायस्य चान्तरायोत्पादनम् । अयमेव प्रकृतिबन्धः ।

---

१. द्रव्यसङ्ग्रहे ७ । २. आप्तपरीक्षायाम् ३ । ३. द्रव्यसङ्ग्रहे ३२ ।

प्रकृतिबन्धो द्विविधः—मूलप्रकृतिबन्ध उत्तरप्रकृतिबन्धश्चेति। मूलप्रकृतिबन्धोऽष्टविधः—ज्ञानावरणम्, दर्शनावरणम्, वेदनीयम्, मोहनीयम्, आयुः, नाम, गोत्रम्, अन्तरायश्चेति। उत्तरप्रकृतिबन्धः सप्तनवतिविधः—ज्ञानावरणं पञ्चविधम्, दर्शनावरणं नवविधम्, वेदनीयं द्विविधम्, मोहनीयम् अष्टाविंशतिविधम्, आयुश्चतुर्विधम्, नाम द्विचत्वारिंशद्विधम्, गोत्रं द्विविधम्, अन्तरायश्च पञ्चविधः।

पञ्चविधं ज्ञानावरणम्—मतिज्ञानावरणम्, श्रुतज्ञानावरणम्, अवधिज्ञानावरणम्, मनःपर्यायज्ञानावरणं केवलज्ञानावरणं चेति।

नवविधं दर्शनावरणम्—चक्षुर्दर्शनावरणम्, अचक्षुर्दर्शनावरणम्, अवधिदर्शनावरणम्, केवलदर्शनावरणम्, निद्रा, निद्रानिद्रा, प्रचला, प्रचलाप्रचला स्त्यानगृद्धिश्चेति।

द्विविधं वेदनीयम्—सद्वेदनीयम्, असद्वेदनीयञ्चेति।

अष्टाविंशतिविधं मोहनीयम्—प्रागुदर्शनचारित्रभेदाद् मोहनीयं द्विविधम्। ततो दर्शनमोहनीयं त्रिविधम्, चारित्रमोहनीयं द्विविधम्—कषायमोहनीयम्, अकषायमोहनीयं च। कषायमोहनीयं षोडशविधम्, अकषायमोहनीयं नवविधम्। तद्यथा—दर्शनमोहनीयं त्रिविधम्—सम्यक्त्वम्, मिथ्यात्वम्, सम्यङ्मिथ्यात्वञ्चेति। कषायमोहनीयं षोडशविधम्—अनन्तानुबन्धी क्रोधो मानो माया लोभश्चेति, अप्रत्याख्यानावरणः क्रोधो मानो माया लोभश्चेति; प्रत्याख्यानावरणः क्रोधो मानो माया लोभश्चेति; सञ्ज्वलनः क्रोधो मानो माया लोभश्चेति। अकषायमोहनीय नवविधम्—हास्यम्, रतिः, अरतिः, शोकः, भयम्, जुगुप्सा, स्त्रीवेदः, पुंवेदो नपुंसकवेदश्चेति। सङ्कलिता भेदा अष्टाविंशतिः।

चतुर्विधमायुः—नरकायुः, तिर्यगायुः, मनुष्यायुः, देवायुश्चेति।

द्विचत्वारिंशद्विधं नामकर्म—गतिः, जातिः, शरीरम्, अङ्गोपाङ्गम्, निर्माणम्, बन्धनम्, सङ्घातः, संस्थानम्, संहननम्, स्पर्शः, रसः, गन्धः, वर्णः, आनुपूर्व्यम्, अगुरुलघु, उपघातः, परघातः, आतपः उद्योतः, उच्छ्वासः, विहायोगतिः, प्रत्येकशरीरम्, त्रसः, सुभगः, सुस्वरः, शुभः, सूक्ष्मः, पर्याप्तिः, स्थिरः, आदेयः, यशस्कीर्तिः साधारणशरीरम्, स्थावरः, दुर्भगः, दुःस्वरः, अशुभः, बादरः, अपर्याप्तिः, अस्थिरः, अनादेयः, अयशस्कीर्तिः, तीर्थंकरत्वञ्चेति। अन्तर्भेदैस्तु मिलित्वा त्रिनवतिभेदाः सम्भवन्ति।

द्विविधं गोत्रम्—उच्चैर्गोत्रं नीचैर्गोत्रञ्चेति।

पञ्चविधोऽन्तरायः—दानान्तरायः, लाभान्तरायः, भोगान्तरायः, उपभोगान्तरायः, वीर्यान्तरायश्चेति ।

## स्थितिबन्धः

बद्धानि कर्माणि न युगपदेव क्षीयन्ते, किन्तु स्वस्वस्थित्यनुसारं कानिचिदल्पम्, कानिचिच्चानल्पं कालं स्थित्वा क्षीयन्ते । नाभुक्तं क्षीयते कर्म । स्थितिर्द्विविधा—परा ( उत्कृष्टा ) अपरा ( जघन्या ) च । ज्ञानावरणस्य, दर्शनावरणस्य, वेदनीयस्य, अन्तरायस्य च परा स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यः; मोहनीयस्य सप्ततिसागरोपमकोटीकोट्यः; नामगोत्रयोर्विंशतिसागरोपमकोटीकोट्यः; आयुषश्च त्रयस्त्रिंशत्सागरोपमा । अपरा स्थितिर्वेदनीयस्य द्वादश मुहूर्ताः, नामगोत्रयोरष्टौ मुहुर्ताः, शेषाणाञ्चान्तर्मुहूर्तः ।

## अनुभागबन्धः

समागतानां कर्मणां फलप्रदानशक्तिरनुभागबन्धः । शुभभावनानां प्रकर्षाच्छुभप्रकृतीनां प्रकृष्टोऽनुभागबन्धोऽशुभभावनानाञ्च प्रकर्षादशुभप्रकृतीनां प्रकृष्टोऽनुभागबन्धो भवति । कर्मणां फलं तन्नामानुरूपं जायते । यथा ज्ञानावरणस्य फलं ज्ञानस्य, दर्शनावरणस्य च दर्शनशक्तेरुपरोधः । रसादिकं निर्माय यथा भुक्तमन्नं मलादिरूपेण निर्याति तथा ज्ञानोपरोधादिकं फलं प्रदाय कर्माणि निर्जीर्यन्ते ।

## प्रदेशबन्धः

प्रतिसमयं समागतानां कर्मणां ज्ञानावरणादिषु यथायथं यो विभागः सञ्जायते स प्रदेशबन्धः । यथा पत्रालये समागतानां पत्राणां तल्लिखितसङ्केतानुसारं विभजनं भवति, तथा यथानाम कर्मणां विभागो भवति ।

कर्मणां करणापरसंज्ञा दश मुख्या अवस्था भवन्ति—बन्धः, उत्कर्षणम्, अपकर्षणम्, । सत्ता, उदयः, उदीरणा, सङ्क्रमणम्, उपशमः, निधत्तिः, निकाचना चेति ।

बन्धः—कर्मणां जीवेन सह सम्बन्धो बन्धः । इयमाद्याऽवस्था । अस्यामवस्थायां सत्यामेवान्या अवस्थाः सम्भवन्ति ।

उत्कर्षणम्—स्थित्यनुभागयोर्वृद्धिरुत्कर्षणम् । अशुभकर्मणां बन्धे जाते सति यदि जीवः स्वीयां दुष्प्रवृत्तिं मनसः कालुष्यं च निरोद्धुं न यतते, तत्तस्याशुभकर्मणां स्थितिरनुभागश्च वर्द्धते ।

अपकर्षणम्—उत्कर्षणतो विपरीतस्वरूपमपकर्षणं भवति ।

सत्ता—बद्धकर्मणां फलदानं यावदवस्थानं सत्ता । बद्धानि कर्माणि नहि सद्यः क्षीयन्ते । यावन्न क्षीयन्ते तावत्तेषां सत्ताऽवगन्तव्या ।

उदयः—फलप्रदानमुदयः । स च द्विविधः—फलोदयः प्रदेशोदयश्च । फलं प्रदाय यानि कर्माणि नश्यन्ति, तेषां फलोदयो ज्ञेयः; यानि च फलप्रदानं विनाऽपि नश्यन्ति तेषां प्रदेशोदयोऽवगन्तव्यः ।

उदीरणा—नियतकालात् पूर्वमेव कर्मणां विपाक उदीरणा । यथा वृक्षलग्नान्याम्राणि समयानुसारं पक्वानि भवन्ति, किन्तु कडङ्गादिनिक्षिप्तानि समयतः पूर्वमेव ।

सङ्क्रमणम्—एकस्य कर्मणः कर्मान्तररूपेण परिणमनं सङ्क्रमणम्, परं मूलभेदेषु सङ्क्रमणं न भवति । नहि ज्ञानावरणं दर्शनावरणत्वेन परिणमति ।

उपशमः—कर्मणः सावऽस्था, यस्यां तदुदयो न स्यात्, उपशमः कथ्यते ।

निधत्तिः—सा अवस्था निधत्तिर्ज्ञेया यस्यां कर्मण उदय-सङ्क्रमणं च न भवेत् ।

निकाचना—सा अवस्था निकाचना ज्ञेया यस्यामुत्कर्षणमपकर्षणं सङ्क्रमणमुदीरणा च न स्युः ।

इत्थमत्र समासतः कर्मणः स्वरूपम्, बन्धः, तद्भेदाः, दश कर्मावस्थाश्च निरूपिताः ।



# प्राचीनभारते शिक्षायाः स्वरूपम्

रामनरेशमिश्रः, भूतपूर्वप्रस्तोता,
वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

कस्यापि देशस्याध्यात्मिकाधिभौतिकोन्नतये तस्य सभ्यतायाः संस्कृतेश्चोत्थानाय तद्देशीयानां नागरिकाणां सर्वाङ्गीणविकासाय शिक्षणपद्धतिरेवाधारशिला भवति। तथ्यमिदमस्माकं वैदिकानाम् ऋषीणामनवगतं नासीत्। अस्मादेव हेतोर्गौतमापस्तम्बमनुप्रभृतित आरम्य रवीन्द्रनाथठाकुरं यावदेवमस्मद् भूतपूर्वराष्ट्रपति-डा०राधाकृष्णन्महोदयं यावदस्मिन् भारते मौलिकचिन्तकानां विचारकाणामेवं शिक्षामनीषिणामेकाऽविच्छिन्नश्रृङ्खला वरीवर्ति, यया स्वीयदिव्यज्ञानज्योतिषा निखिलं विश्वं न केवलं प्रकाशितम्, अपि तु तज्जीवनदर्शनद्वारा सत्यः पन्थाः प्रदर्शितः।

## शिक्षाया उद्देश्यम्

प्राचीनभारतेऽस्माकं देशे शिक्षाया उद्देश्यं ब्रह्मवर्चसः प्राप्तिरासीत्, यथा भगवता श्रीकृष्णेन स्वीयगीतायामभिहितम्—"योगस्थः कुरु कर्माणि", पतञ्जलिरपि—"योगश्चित्त-वृत्तिनिरोधः" इति योगस्य परिभाषां कृतवान्। बालकानां व्यक्तित्वविकासाय तथा तेषां योग्यनागरिकत्वनिर्माणाय मूलोद्देश्ये लौकिकोद्देश्यमन्तर्निहितमासीत्। हर्बर्टस्पेंसरमहोदयस्य तथा डाक्टरजानड्यूबीमहोदयस्य च पूर्णजीवनं शिक्षा एव जीवनं क्रमश उद्देश्यमासीत्। सर्वं चेदम् "यावज्जीवमधीते विप्रः" इति सिद्धान्तेऽन्तर्हितमस्ति।

## शैक्षिकसत्रम्

शैक्षिकसत्रं च श्रावणपूर्णिमातः (उपाकर्मतः) प्रारभ्यते स्म; पौषमासं माघमासं वा यावत् तस्योत्सर्जनकालः। वर्णाश्रमधर्मानुसारेण द्विजच्छात्राणामध्ययनारम्भ उपनयन-संस्कारानन्तरं भवति स्म। छान्दोग्योपनिषदनुसारेण समित्पाणिश्छात्रो गुरोः सकाशं गच्छति स्म। गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च देवतानां समीपं वा येनाऽसौ नीयते द्विजस्तदुपानयनं प्रोक्तम्। अत एव छात्रोऽन्तेवासित्वेन प्रोक्तो भवति स्म। आचार्यश्छात्राणामाध्यात्मिक एवं बौद्धिकः पिता भवति स्म। यथा अथर्ववेदे उक्तम्—"आचार्य उपनयमानो ब्रह्मचारिणं

कृणुते गर्भमन्तः” इति। याज्ञवल्क्येनापि—“उपनीय ददद्वेदमाचार्यः स उदाहृतः” इत्याचार्यस्य परिभाषा कृता। यास्कोऽपि—“आचारानाचिनोति, अर्थानाचिनोति, बुद्धिं वा आचिनोति” इत्याचार्यस्य व्युत्पत्तिं कृतवान्। एकस्य वेदस्याध्ययनं द्वादशवर्षं यावद् भवति स्म। “द्वादश वर्षाणि एकवेदे ब्रह्मचर्यं चरेत्, प्रति द्वादश वा” इति गौतमधर्मसूत्रम् (२।५२-५४)। चतुर्णां वेदानामध्ययनकर्तारस्तेषामध्ययनेऽष्टचत्वारिंशद् वर्षाणि यावदध्ययनकाल आसीत्। केचनैतादृशा अपि अभूवन्, ये यावज्जीवनं वेदस्याध्ययनं कुर्वन्ति स्म। अयं चाध्ययनकालो ब्रह्मचर्याश्रमनाम्ना प्रसिद्धो बभूव। एतादृक् चाध्ययनकर्ता ‘नैष्ठिकब्रह्मचारी’ इति शब्देन व्यवह्रियते स्म। मनुः केवलं वेदत्रयाणामेवाध्ययनमनुरुणद्धि स्म, अतस्तेन षट्त्रिंशद् वर्षाणि यावदध्ययनस्य कालो निर्धारितः—“षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्” (मनु० ३।१)। अयं चाध्ययनकालोऽष्टवर्षत आरभ्य पञ्चविंशतिवर्षाणि यावत् प्रचलति स्म। आश्रमेण चानेन ब्रह्मचारिणो भाविजीवनमतिप्रभावितमभूत्। अत एवाथर्ववेदेनास्यानुपालने दार्ढ्यं प्रदर्शितम्—

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति।
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।
ब्रह्मचर्येण देवा मृत्युमुपाघ्नत ॥
(११।५।१७-१९)

## अध्ययनकालः

ब्रह्मचर्यव्रतस्यास्य प्रारम्भ आपस्तम्बमतेन ब्राह्मणकुमारस्याष्टमे वर्षे वसन्तर्तौ, क्षत्रियकुमारस्यैकादशवर्षे ग्रीष्मर्तौ तथा वैश्यकुमारस्य द्वादशाब्दे शरदि भवति स्म—‘वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्। गर्भाष्टमेषु ब्राह्मणम्, गर्भैकादशेषु राजन्यम्, गर्भद्वादशेषु वैश्यम्।” यदि कारणविशेषेण निर्धारितसमये संस्कारोऽयं न विहितस्तदाऽस्यान्तिमोऽवधिर्द्विगुणितं यावन्निर्धारितस्तदतिक्रमणे कुमारः शूद्रत्वमाप्नोति—“नातिषोडशवर्षमुपनयीत, प्रसृष्टवृषणो ह्येष वृषलीभूतो भवति” (जै० गृ० सू० १-१२); तथा च सावित्रीवाचनाधिकाराद् वञ्चितोऽभूत्। कोऽपि गृही तस्मै स्वीयां कन्यां न ददाति स्म। एतादृशकठोरसामाजिकदण्डभयाद् बालानां शिक्षा प्रायः शश्वं प्रतिष्ठितमासीत्। निरक्षरतायै स्थानमपि नाऽसीत्।

उपनयने वेदाध्ययनं सावित्रीव्रतेन, एवं सावित्रीवाचनतः प्रारभ्यते स्म। ब्राह्मणबालकः “ओ३म् भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ओम्” इति

विश्वामित्रीयगायत्रीमत्रेण ( ऋग्० ३।६२।१० ) दीक्षितोऽभूत् । क्षत्रियबालको मेधातिथिमतेन त्रिष्टुप्छन्दसि हिरण्यस्तूपीयगायत्रीमन्त्रेण दीक्षितोऽभूत्—

आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्येन सविता रथेन देवो याति भुवनानि पश्यन् ।
(ऋग्० ५।८१।२)

वैश्यबालकश्चाश्वलायनगृह्यसूत्रानुसारम् ( ३।७ ) जगतीछन्दसि—

विश्वारूपाणि प्रतिमुञ्चते कविः प्रासावीद् भद्रं द्विपदे चतुष्पदे ।
विनाकमख्यत् सविता वरेण्योऽनुप्रयाणमुषसो विराजति ॥
( ऋग्० ५।८१।२ )

इति मन्त्रेण दीक्षितोऽभवत् ।

व्रतमिदं पारस्करमतेन वर्षैकं मासषट्कं चतुर्विंशतिर्दिनानि दिनत्रयं वा प्रचलति स्म ।

## ब्रह्मचारिणो वेषभूषणम्

ब्रह्मचारिणः कृते एकं विशिष्टं वेषभूषणं निर्धारितमासीत्, येनानायासेन स परिचीयते स्म । ब्राह्मणब्रह्मचारिण ऊर्ध्ववस्त्रं कृष्णमृगाजिनम् एणाजिनं वाऽऽसीत्; क्षत्रियब्रह्मचारिणो रौरवम्; वैश्यब्रह्मचारिणो वस्ताजिनम्, अजाचर्म वाऽसीत् । किन्तु पारस्करानुसारं सर्वेषां गोचर्मधारणे समानाधिकार आसीत्—"सर्वेषां च गव्यम्"; "कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, गव्यं वस्ताजिनं वा वैश्यस्य"—वसिष्ठधर्मसूत्रम् (११२।१४) ।

मन्वानुसारं ब्राह्मणब्रह्मचारिणोऽधोवस्त्रं शाणम्, क्षत्रियस्य क्षौमम्, वैश्यस्याविकमजाजिनं वाऽऽसीत् । "वासांसि शाणक्षौमं चीरकुतवाः सर्वेषाम्"—गौतमधर्मसूत्रम् १।१८-२३ । आपस्तम्बमतेन ब्राह्मणः काषायम्, क्षत्रियो माञ्जिष्ठम्, वैश्यो हारिद्रं वस्त्रं धारयति स्म । वने निवसतो ब्रह्मचारिणोऽपरार्कमतेन स्वरक्षायै, वराहमतेन वेदत्रयीरक्षार्थम्, मन्वनुसारं सत्यान्वेषणे संलग्नस्य यात्रिणः स्वसाहाय्यार्थं दण्डधारणमावश्यकमभूत् । दण्डश्चायं सत्वगनुद्वेगकरश्चाभवत् । गौतममतेन ब्राह्मणब्रह्मचारिणो बैल्वः पालाशो वा, अन्येषां चाश्वत्थः पैलवो वा भवेत्—'बैल्वपालाशौ ब्राह्मणदण्डौ, आश्वत्थपैलवौ शेषे" ( गौतमधर्मसूत्रम् १।२४-२५ ) । ते क्रमशो मूर्धललाट-नासिकाग्रप्रमाणाः स्युः ( गौतमध० सू० १।२७-२८ ) ।

वेदत्रयीरक्षायै त्रिगुणितरज्वा मेखला ब्रह्मचारिणोऽपेक्षिताऽऽसीत्—ब्राह्मणस्य मौञ्जी, क्षत्रियस्य ज्यायाः, वैश्यस्य शणनिर्मिता निर्धारिताऽऽसीत् ( "मौञ्जीज्यामौर्वी सौत्र्यो मेखला क्रमेण" गौतमध० सू० ) ।

ब्रह्मचारिणो यज्ञोपवीतधारणमप्यावश्यकमासीत् । इदं नवतन्तुनिर्मितमासीत्, तथा च नवदेवशक्तीनां प्रतीकमासीत् । एते देवा ब्रह्मचारिणे स्वीयां शक्तिं प्रददुः । एतेषां नामानि—ओङ्कारः, अग्निः, नागः, सोमः, पितरः, प्रजापतिः, वायुः, सूर्यः, सर्वदेव इति । इदं च ब्राह्मणाय कार्पासम्, क्षत्रियाय शाणम्, वैश्याय अजचर्मनिर्मितं भवति स्म ।

ब्रह्मचारिणः स्वकुलानुसारमथवा गुरोरनुसारं मुण्डनम्, जटाधारणमथवा शिखाजटत्वं भवन्ति स्म—"मुण्डजटिलशिखाजटश्च" गौतमध० सू० १।१६ । प्रायस्ते दीर्घश्मश्रव एवाभूवन् ।

पारस्करगृह्यसूत्रानुसारं शिष्यत्वस्वीकृतेः प्राग् आचार्यो ब्रह्मचारिणमप्राक्षीत्—"कस्य त्वं ब्रह्मचार्यसि ? भवत इत्युच्यमाने इन्द्रस्य ब्रह्मचार्यसि, अग्निराचार्यस्तव" । अस्याभिप्राय आर्याणां सर्वेषु देवेष्विन्द्राग्न्योः शक्तिशालित्वे छात्रस्यास्थां द्रढयितुमासीत् ।

## विद्यायाः प्रकारः

विद्या द्विविधाऽऽसीत्—पराऽपरेति । परा सर्वोच्चविद्याऽभवत्, यया ब्रह्मज्ञानं प्राप्यते, तथा च "तत्त्वमसि" इति वेदान्तमहावाक्यस्यावगमोऽप्यनयैवाभवत् । इयं च पारलौकिकी विद्याऽऽसीत् । लौकिकी च विद्या परेति व्यपदिश्यते स्म । अस्या षडङ्गाः—चत्वारो वेदाः, धर्मशास्त्रम्, मीमांसा, तर्कशास्त्रं पुराणानि चासन् । अस्यामेव विद्यायामष्टादशशिल्पयुक्ताश्चतुष्षष्टिकला अप्यन्तर्निहिता आसन् ।

## ब्रह्मचारिणः कर्तव्यानि

ब्रह्मचारी ब्राह्मे मुहूर्ते "पक्ष्यादीनां वाग्वादनात् प्रागेव" बुध्यते स्म । आचार्याय नित्यकर्मसामग्र्याः प्रस्तुतीकरणानन्तरं पारस्करमतेन होमार्थं समिदाहरणाय वनमगच्छत् । अस्मिन् कर्मणि वृक्षाणां काऽपि क्षतिर्न स्यादित्यवधेयमासीत् । ब्रह्मचारिण आश्रमार्थमेव गृहिभ्यो भैक्ष्यमाचरन्ति स्म । एतद्धि तेषु विनयाधानार्थमकारयिष्यत् । समावर्तनानन्तरं भैक्ष्यं निषिद्धमासीत्, यथा चोक्तं बौधायनेन—"समावृत्तस्य भिक्षा शुचिकरा" ( २-१-६३ ) । छात्रो गुरोः सान्निध्य एवावात्सीत् । अतस्त्वयमाचार्यकुलवासी ( शतपथ० ३।६।२।१५ ); अथाऽन्तेवासीति ( छान्दोग्य० ४।४।५ ) व्यवह्रियते स्म । गुरुशुश्रूषयैव ज्ञानमप्राप्यत । गुर्वर्थं गोचारणमप्यपेक्षितमासीत् (छान्दोग्य० ४।४।५) । शतपथब्राह्मणे उल्लिखितम् (३।६।२।१५) ।

शतपथब्राह्मणे उल्लिखितमस्ति यत् सत्यकामेन जाबालेन स्वस्य गुरोः गुर्वी तावत् सेवा कृता, यावत् तासां संख्या चतुश्शत्याः सहस्रमिता न जाता । ब्रह्मचारिणां कृते दिवास्वापः,

जलक्रीडा, सुगन्धमाल्यलेपाञ्जनोपानच्छत्रपर्यङ्कगीतवाद्यनृत्यमधुमांसादिकम्, कामक्रोधलोभमोह-स्त्रीप्रेक्षणद्यूतहीनसेवादिकं सर्वं त्याज्यं विद्यते स्म।

## अनध्यायः

प्रतिमासं चत्वारि दिनानि नियमितानध्यायस्यासन्—प्रतिपत्, अष्टमी, चतुर्दशी अमावस्या च। उक्तं च—

हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी।
हन्ति पञ्चदशी विद्यां तस्मात् पर्वणि वर्जयेत्॥ इति।

प्रतिपद् पाठ्यार्थमतिहेयाऽऽसीत्। "प्रतिपत्पाठविवर्जिता। प्रतिपत्पाठशीलस्य विद्येव तनुतां गता" (वाल्मीकीयरामायणे सुन्दरकाण्डे)। बाह्याक्रमणकालेऽथवा शान्तेः काले, दस्यूनामुपद्रवकाले, कस्यचिदाकस्मिके निधने सति, असमये मेघागमे, विद्युद्भूकम्पझंझावातातिवृष्टिकुज्झटिकानीहारवातादीनामुपद्रवे, शृगालवृकोलूकरासभकुक्कुरादीनां रवे सति पाठशालायामनध्यायो भवति स्म। यदि कोऽपि छात्रः कस्मिंश्चिद्दिनेऽनुपस्थितोऽभविष्यत् तदा तद्दिनेऽनध्यायोऽभविष्यत् तत्कक्षायाम्। अपवित्रदशायां वेदानामध्ययनं विवर्जितमासीत्। अवयस्कबालकेभ्यः शीघ्रमवकाशः प्रदीयते स्म। अद्यतना इव प्राचीनकालेऽपि अवकाशलब्धौ बालका हृष्टचेतसो भवन्ति स्म, यथा भवभूतिना उत्तररामचरिते उक्तम्—"स्वागतमनेकप्रकाराणां जीर्णकूर्चानामनध्यायकारणानाम्।" परन्त्ववकाशकाले वेदानामध्ययनं विहायाऽन्यासां विद्यानामध्ययने निषेधो नासीत्।

नानध्यायोऽस्ति चाङ्गेषु नेतिहासपुराणयोः।
न धर्मशास्त्रेष्वन्ये पर्वण्येतानि वर्जयेत्॥

(कूर्मपुराणम्)

## अध्यापाकानां प्रकाराः कर्तव्यानि च

अध्यापकानां प्रकारत्रयं प्रसिद्धमासीत्—(१) गुरुः, (२) आचार्यः, (३) उपाध्यायश्च। यो बालकस्य गर्भाधानसंस्कारादारभ्य समस्तान् संस्कारान् कारयति स्म, तथैव तं वेदमध्यापयति स्म, स एव गुरुरित्युच्यते स्म। प्रायशः पितैव गुरुरभवत्।

स गुरुः यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय ददद् वेदमाचार्यः स उदाहृतः॥

(याज्ञवल्क्य० १।३४)

मनुमहर्षेरनुसारेण स एवाचार्यपदभाग् भवति स्म, यश्छात्रान् वेदान् वेदाङ्गानि च सरहस्यानि पाठयति स्म। "उपनीय तु यः कृत्स्नं वेदमध्यापयेत् स आचार्यः" (वसिष्ठ० ३।२)। स 'अतिगुरुः' इत्याख्यां प्राप्नोति स्म। त्रयः पुरुषस्यातिगुरुवो भवन्ति—माता, पिता आचार्यश्च ( विष्णुस्मृतिः २ )। आचार्यो गुरुणां श्रेष्ठतमो मन्यते स्म। "आचार्यः श्रेष्ठो गुरूणाम्" ( गौतमध० सू० २।५७ )।

उपाध्यायस्तु केवलं वेदानामेकमङ्गं पाठयति स्म। "एकादेशमुपाध्यायः"—याज्ञवल्क्य० १।३५। विष्णुमतानुसारं यः सशुल्कं वेदानामध्यापनं करोति स्म, स उपाध्यायपदवाच्योऽभवत्। मुण्डकोपनिषदनुसारेणाचार्यपदाभिधेयः स एव भवितुमर्हति स्म, यः श्रोत्रियाभिजातः। एवं यस्य कुले वेदाध्ययनं परम्परया प्राचलत्। "श्रोत्रियं ब्रह्मनिष्ठम्"—मुण्डक० १।२।१२। "तस्मिन्नाभिजनविद्यासमुदितं समाहितं संस्कर्तारमभीप्सेत"—आपस्तम्बधर्मसूत्रम् १।१।१२।

## अब्राह्मणाध्यापकः

आपत्काले ब्राह्मणाध्यापकस्याप्राप्तौ अब्राह्मणादपि वेदाध्ययनं विहितमासीत्। उपनिषत्काले बहव एतादृशा राजर्षयः स्वकीयब्रह्मज्ञानविषये प्रसिद्धा अभूवन्। एवं ते ब्राह्मणब्रह्मचारिणमपि वेदानध्यापयन्ति स्म। उदाहरणाय विदेहस्य राजा जनकः, मगधस्याजातशत्रुः, पाञ्चालस्याश्वपतिः, अथवा जाबालिः। एते वेदविदः प्रसिद्धाः। प्रोफेसरमैक्समूलरमहाशयानामस्मिन् विषये भ्रमोऽस्ति यत् तैर्लिखितं ब्राह्मणा एवाचार्या भवितुमर्हा आसन्। बौधयानापस्तम्बगौतममनुप्रभृतिभिर्महर्षिभिः सर्वैरापत्कालेऽब्राह्मणादध्ययनस्यानुमतिः प्रदत्ता। "अब्राह्मणादध्ययनमापदि" ( बौधायनध० सू० २।४० )।

परन्त्वेतन्नानृतं यत् सामान्यतो ब्राह्मणाचार्यादेव शिक्षाग्रहणस्य नियम आसीत्। शिक्षार्थिभिः शिक्षाकाले तथैव श्रद्धयाऽऽदरेण चाब्राह्मणाचार्यविषये व्यवहरणीयमासीत्, तथा च ते ब्राह्मणाचार्यविषये व्यवहरन्ति स्म। स ब्रह्मचारी आचार्यमनुवर्तते स्म, तस्याज्ञां पालयति स्म, तं सुश्रूषते स्म। "अनुव्रज्या च शूश्रूषा यावदध्ययनं गुरोः"—मनु० २।२४१।

एतादृशानामप्याचार्याणामुदाहरणानि प्राप्यन्ते ये च ब्राह्मणाः सन्तोऽपि धनुर्वेदसदृशानामवैदिकानां विषयाणामप्याचार्यत्वं कुर्वन्ति स्म। यथा महाकाव्यकाले द्रोणाचार्येण कौरवपाण्डवेभ्यो धनुर्वेदस्य शिक्षा प्रदत्ता।

## गुरुशिष्यसम्बन्धः

गुरुशिष्ययोः पितापुत्रयोः सम्बन्धोऽविद्यत। "पुत्रमिवैनमभिकांक्षति"—आपस्तम्बध० सू० १।२।८।२४। वैखानसधर्मसूत्रेण ब्रह्मचारिणे आशिर्वादप्रदानस्यानिवार्यविधानमाचार्यस्य

कृतमस्ति । "आयुस्मान् भव सौम्य इत्येवं शंसेत्, अनाशीर्वादी नाभिवन्द्यः"—२।१०।६। भगवता पतञ्जलिनाऽपि 'पुत्रीयति'शब्दस्य प्रयोगः कृतः। गुरुरेव विद्यार्थिनां संरक्षको भवति स्म। स छात्रान् मार्गमादिशति स्म। छात्रे रुग्णे जाते तस्य चिकित्सायाः परिचर्यायाश्च प्रबन्धस्तेनैव करणीय आसीत्। गृहस्थाश्रमे प्रविष्टा समावृताश्चापि छात्रा शङ्कासमाधानार्थमथवाऽतिरिक्तज्ञानप्राप्त्यै पुनर्गुरुमुपागच्छन्ति स्माश्रमे। गुरूणामपि किमपि विद्याविषयकं रहस्यं छात्रेभ्यो गोपनीयं न मन्यते स्म। यथा प्रश्नोपनिषदि स्वशिष्यं प्रति भरद्वाजस्योक्तिः स्फुटैव—"नाहमिदं वेद। यद्यवेदिषं कथं ते नावक्ष्यम्" इति। अत एव श्रोत्रियं स्वपुत्ररहितमपि पुत्रहीनं न मन्यन्ते स्म जनाः। यतो हि तस्यानेके शिष्याः पुत्रसदृशा एवासन्। तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न वदन्तीति (वसिष्ठध० सू० २।१०)। अत एव शिष्याय गुर्वर्थं पितृवत्तर्पणस्य श्राद्धस्य चाधिकारा धर्मशास्त्रैः प्रदत्ताः। गुरौ वैदुष्यमेव केवलं नापेक्ष्यते स्म, अपि तु व्याख्यातृशक्तिरप्यपेक्ष्यते स्म। महाभारतेऽध्यापकस्य गुणानां विषये शोभनं वर्णनं विद्यते—

प्रवृत्तवाक् चित्रकायः ऊहवान् प्रतिभानवान्।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते॥

(महाभारते ५।३३।३३)

छात्रो विद्याप्राप्त्यै गुरुमेवाश्रितो भवति स्म। यथा च नारदोक्त्या सुस्पष्टम्—

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ।
भ्राजते न सभामध्ये जारगर्भ इव स्त्रियः॥

शिष्याणां कृतेऽध्यापकपरिवर्तनं नोचितं मन्यते स्म। ये छात्रा गुरुकुलं समधिगम्य चिरं विद्याग्रहणमकृत्वैव परावृत्यान्यमाचार्यमुपसीदन्ति स्म, ते 'तीर्थकाक' इति पदाभिधेयतां गच्छन्ति स्म। पतञ्जलिमहर्षिणा महाभाष्ये तदेवोक्तम्—"यो गुरुकुलं गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाक इति"।

आचार्यस्य कृते शिष्यस्य व्यक्तिगतकार्ये नियोजनं वर्जितमविद्यत। स तदेव कार्यं कारयितुं शक्त आसीद् येन शिष्यस्य सर्वाङ्गीणविकासे सहायकं भवति स्म। एवं च यत् तस्मिन् सामाजिकतां सञ्चारयति स्म। यथा चोक्तमापस्तम्बधर्मसूत्रे—"न चैनमध्ययनविघ्नेन आत्मार्थेषूपरुन्ध्यादनावत्सु"।

आचार्या बहुवारं छात्रेषु तथा स्निह्यन्ति स्म, यथा ते स्वकन्याया विवाहमपि तैः साकमकुर्वन्। बौद्धकालेऽपि सेयं प्रथा दरीदृश्यते। सीलविमनसजातके (सं० ३०५) अस्याः

प्रथायाः परिपुष्टिर्भवति । पाश्चात्त्यस्मृतिकारैरस्याः प्रथाया विरोधे स्वकीयानि मतानि प्रतिपादितानि । यतो हि छात्रगुरुकन्ययोर्भातृभगिन्योः सम्बन्धोऽस्ति । अत एव कचेन देवयान्या विवाहविषयकः प्रस्तावस्तिरस्कृतः ।

## निःशुल्कशिक्षा

सामान्यरूपेण तदानीमाचार्या निःशुल्कं शिक्षणं कुर्वन्ति स्म, परन्तु समावर्तनाव्यवहितोत्तरं ब्रह्मचारी गुरुदक्षिणां दातुं प्राभवत्; किन्तु तदर्थं कोऽपि निर्बन्धो नासीत् । यथा च रघुवंशे वरतन्तुकौत्सयोः कथानके सुस्पष्टम् । आचार्या अध्यापनं स्वधर्ममभिमन्यन्ते स्म । अध्यापनमायस्य स्रोतो नासीत् । अनेन प्रकारेण ते आत्मन ऋषि-ऋणादुन्मुक्तान् मन्यन्ते स्म । विष्णुमतानुसारेण समावर्तनप्राग् दक्षिणाग्रहणमुपपातकमासीत् ( ३७।२०,२३,३४ ) । मनोरपि मतमिदमेवाविद्यत । कविकुलगुरुणा कालिदासेनापि मालविकाग्निमित्रेऽस्या वृत्तेर्निन्दा कृताऽस्ति—"यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति" (अं० १, श्लो० १७) ।

## दण्डः

प्राचीनकाले शिक्षाक्षेत्रेष्वनुशासनहीनताया उदाहरणानीदानींतनापेक्षया स्वल्पतमानि दरीदृश्यन्ते स्म । अविनीतं ब्रह्मचारिणं गुरुः प्रथममबोधयत्, तस्मिन् भीतिमजनयत्, अतर्जयत्, व्रतमकारयत्, शीतकाले शीतजलेनास्नापयत् । एवं कदाचिदाश्रमान्निष्कासयति स्म । यद्येतादृशानां दण्डानां प्रभावो नाभवत्, तदा शारीरिकदण्डेन तमदण्डयत् । शरीरस्य पृष्ठभागं रज्वाऽथवा वेणुयष्टिकया अताडयत्; कोमलाङ्गे कदाऽपि नाताडयत् । यदि कोऽप्याचार्यश्छात्रस्य कोमलाङ्गं ताडयति स्म, तदा मनुगौतमयोरनुसारेण राजदण्डेन स दण्ड्यते स्म । "पृष्ठतस्तु शरीरस्य नोत्तमाङ्गं कदाचन" ( मनु० ८।३०० ) । यदि कोऽप्युद्दण्डो ब्रह्मचारी अद्यतन इव गुरुभिः सह प्रतिशोधार्थं प्रायतत, तदा स याज्ञवल्क्यानुसारेण सामान्यापराधीव कठोरतमस्य राजदण्डस्य भोक्ताऽभवत् ।

## अध्यापनस्य विधिः

शिक्षा तावद्वैयक्तिक्यासीत् । प्रायः प्रत्येकं ब्रह्मचारी पृथक् शिक्ष्यते स्म । अत एवैकस्याचार्यस्य समीपे द्वादशभ्यश्छात्रेभ्योऽधिका नाऽतिष्ठन् । साधारणतः षट्संख्याकाश्छात्रा एवैकस्याचार्यस्य समीपेऽधीयते स्म । फलतः प्रत्येकं छात्रस्य व्यक्तित्वस्य पूर्णविकासे पर्याप्तं ध्यानं प्रादीयत । बालमनोरमाकारेण पाणिनिप्रयुक्ताध्ययनशब्दस्य व्याख्या "गुरुमुखादक्षरानुपूर्वी-

ग्रहणम्" इत्यकारि। वेदाः पाठ्यविषया अभवन्। पाठनस्य विधिः कण्ठस्थीकरणमविद्यत। इदं पाणिनेः "श्रोत्रियंश्छन्दोऽधीते" इत्यनेन सूत्रेण भवति। भाष्यकारो भगवान् पतञ्जलिः 'अधीते' इत्यस्य कण्ठाग्रपठनमिति व्याख्यानमकरोत्; किन्तु वेदातिरिक्तानां विषयाणां मौनमप्यध्ययनमधीतबोधपूर्वकमध्ययनमभवत्। बालमनोरमाकारेण पाणिनेः सूत्रस्य "तदधीते तद्वेद" इत्यस्य "शब्दार्थज्ञानं वेदम्" इति व्याख्या कृता। भगवता भाष्यकारेण पठनस्य द्वैविध्यं प्रतिपादितम्—उच्चैः पठनम्, मौनं पठनम्। अतः पठनस्येदं विभाजनमति प्राचीनं विद्यते, नेदमाधुनिकानां शिक्षाशास्त्रिणां दानम्। आचार्यो मन्त्रं सस्वरं पञ्चवारमुच्चरते स्म, यथा च काशिकायाः 'पञ्चकोऽधीतः' इति प्रयोगेण सुस्पष्टम्। तदनन्तरं छात्र आवर्तयति स्म। छात्रस्य 'ओऽम्' इत्युच्चारणानन्तरमिदमवाबुध्यत यदनेनात्मसात्कृतमिति। श्रेणीनां विभाग उच्चारणस्याशुद्धौ निर्भर आसीत्। एकामशुद्धिं कुर्वाणस्य छात्रस्य 'एकान्यिक' इति नाम भवति स्म। एवं क्रमशश्चतुर्दशाशुद्धयः परिगणिता अभवन्। अध्ययनस्य चत्वारः क्रमा अभवन्—श्रवणम्, मननम्, निदिध्यासनम्, उपासना च। छात्राः स्वं स्वं काठिन्यं परिप्रश्नेन निराकर्तुमशक्नुवन्। यथा च श्रीमद्भगवद्गीतायामुक्तम्—"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।"

वाचस्पतिमिश्रमहोदयैर्हर्बर्टमहाशयादतिपूर्वं पञ्चक्रमा निर्दिष्टाः—

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥

महाभाष्यकृताऽपि चत्वारः क्रमा निर्दिष्टाः—आगमः, स्वाध्यायः, प्रवचनं व्यवहारश्च। वैदिककाले लिपिज्ञानविरहादेव कण्ठस्थीकरणस्य महत्त्वमविद्यत। वेदाः क्षेपकेभ्योऽशुद्धिभ्यश्च दूषिता न भवेयुः, अतोऽष्टानां विकृतीनां विधानमभवत्—पदम्, क्रमः, जटा, शिखा, माला, रेखा, रथम्, दण्डो घनश्च। कुत्रापि शङ्कायां सत्यामन्यविकृतिद्वारा समाधानं क्रियते स्म। वैदिकानां मन्त्राणामुच्चारणे महत्त्वमवर्तत। अत एव प्रातिशाख्यानां रचनाऽभूत्। मन्त्राणां केवलं कण्ठस्थीकरणमेव पर्याप्तं नासीत्, अपि तु तेषामर्थज्ञानमत्यावश्यकमासीत्। अतो यास्केन निरुक्तस्य प्रणयनमकारि। स्वाध्यायकालः साधनायास्तपश्चरणस्य च कालोऽविद्यत। अत एव ब्रह्मचारिणो विद्यया पूर्णतया परिनिष्ठता भवन्ति स्म। प्रत्येकम् ऋषिकुलेऽथवाऽऽश्रमे आचार्यस्यानुपस्थितावाचार्यस्य पुत्रो वरिष्ठः शिष्यो वा यूरोपस्य मध्यकालीनस्य 'मानीटर' इव कनीयसश्छात्रानध्यापयति स्म।

## परीक्षा

वैदिककाले परीक्षा मौखिकी आसीत्। अशुद्धयनुसारेण श्रेणीविभाजनं भवति स्म, यथा च पूर्वमुक्तम्। प्रतिदिनं गुरुभिर्नूतनः पाठस्तदैव प्रारभ्यते स्म यदा पूर्वस्य दिवसस्य पाठः पूर्णतयाभ्यस्तोऽभवत्। प्रत्येकं छात्रस्य प्रगतिः पृथग्रूपेण भवति स्म, यथा चाधुनिक्यां डाल्टन-योजनायां दृश्यते। अध्ययनस्य समाप्तौ छात्रस्यान्तिमा परीक्षाऽभवत्, यथा च जीवकस्योदाहरणेन सुस्पष्टम्। जीवकस्तक्षशिलायां सप्तभिर्वर्षैरायुर्वेदं महता परिश्रमेणाध्यैत। अन्ते चाचार्येण स एकां खनित्रीं दत्वा तक्षशिलां परित एकयोजनाभ्यन्तरादेकं कमपि पादपमानेतुमाज्ञप्तः, यत्रैकोऽप्यौषधीयगुणो न भवेत्, परन्तु जीवकः सर्वान् पादपान् विश्लिष्याख्यातवान् यन्नैतादृशः कोऽपि पादपो यस्मिन्नौषधीयगुणव्यतिरेकः। स विशेषयोग्यतया परीक्षामुदतरत्। प्रायश्च एतादृशा एव प्रयोगात्मिकाः परीक्षा भवन्ति स्म। मध्ययुगे शलाकापरीक्षाणामपि प्रचलनमजायत। यत्र च पुस्तके यावत्पर्यन्तं शलाका स्पृशति स्म तत्स्थलादग्रे छात्रेणानुपूर्वीप्रतिपादनं कर्तव्यमासीत्।

## नारीशिक्षा

प्राचीनतमे काले बालिकानां शिक्षा अत्युन्नता आसीत्। एवं समाजे तासामुच्चस्थानमविद्यत। शिक्षणविषये बालकबालिकयोर्भेदो नासीदासीच्च तयोः सहशिक्षाऽपि प्रचलिता। यद्यपि छात्राश्छात्रेभ्यः पृथक् छात्रावासमधिवसन्ति स्म। पाणिनेः सूत्रेण "छात्र्यादयः शालायाम्" इत्यनेनेदमेवावभासते यदासीत् सहशिक्षयाः प्रचलनं भवभूतिकालपर्यन्तम्—"तेभ्योऽधिगन्तुं निगमान्तविद्याम्"। पत्या सह पत्नी अपि नियमपूर्वकं यजते स्म। पाणिन्यनुसारं भार्यायाः संज्ञा 'पत्नी' इत्यनेनैव कारणेनाभवत्। "पत्युर्नो यज्ञसंयोगे"; पत्नीविहीनानां पुरुषाणां यजनेऽधिकारो नासीत्। "अयज्ञियो वा एष योऽपत्नीकः"—शतपथब्रा० ५।१।६।१०। उपनीतानामेव यजनेऽधिकारोऽविद्यत। अत एव कन्यकानामप्युपनयनं भवति स्म। एवं ता अपि ब्रह्मचर्यं चरन्ति स्म। "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्" (अथर्व० ११।६)। ऋषीणामिव ऋषिका अपि वेदमन्त्राणां रचयित्र्यो मन्त्रद्रष्ट्र्यश्चासन्। एतादृशीनां त्रयोविंशतिसंख्याकानाम् ऋषिकाणां नामानि ऋग्वेदे सामवेदे च प्राप्तानि, यासु रोमशा, लोपामुद्रा, अपाला, विश्ववारा, घोषा, कद्रूः, वौलोगी, सिक्ता, उर्वशी, सावित्री—इत्यादयः प्रसिद्धाः। यमस्मृतौ कन्यकानामुपनयनस्य सावित्रीवाचनस्योल्लेखोऽस्ति—

पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥

वैदिके काले स्त्रियो विदुष्यो भवन्ति स्म । विदेहस्य जनकस्य राज्ञः सभायां गूढं दार्शनिकं प्रश्नं यदा गार्गी अपृच्छत्, तदा याज्ञवल्क्यमहर्षिणा कथितं च "अनतिप्रश्न्यां वै देवतामतिपृच्छसि" । याज्ञवल्क्यस्य पत्नी मैत्रेयी धनाभूषणादिसांसारिकपदार्थान् हेयान् मत्वा स्वपतिमवदत्--"येनाहं नामृता स्याम्, किं तेनाहं कुर्याम्" इति ।

महाकाव्यसमयेऽपि कुन्ती अथर्ववेदस्य पण्डिताऽभवत् । कौशल्या-ताराप्रभृतिनां विदुषीणामपि नामानि प्राप्यन्ते । कौशल्या रामचन्द्रस्य यौवराज्याभिषेकसमये यजति स्म—"अग्निं जुहोति स्म तदा मन्त्रवित्कृतमङ्गला" (वाल्मीकीयरामायणम् २।२०।१०) । ताराऽपि स्वपत्युर्वालेर्विजयाय स्वस्त्ययनमकरोत्—"ततः स्वस्त्ययनं कृत्वा मन्त्रविद् विजयैषिणी" ( वाल्मीकीयरामा० ४।१६।१२ ) । बृहदारण्यकोपनिषद्येकः पुरुषो विदुषीपुत्र्यर्थं प्रार्थ्यते । गोभिलगृह्यसूत्रे उक्तं च—"नहि खलु अनधीत्य शक्नोति पत्नी होतुम्"इति ।

ब्रह्मचारिणीनां वर्गद्वयमवर्तत—सद्योवधूः, ब्रह्मवादिनी च । सद्योवध्वः केवलं गृहकृत्य एव संस्कारोपयोगिनां मन्त्राणामध्ययनं कुर्वन्ति स्म । एवं च ता नृत्यगीतवाद्यगृहविज्ञानादिविषये कुशला भवन्ति स्म । ब्रह्मवादिन्यः पूर्णवेदाध्ययनानन्तरमेव विवाहं कुर्वन्ति स्म । कतिपय्य एतादृशोऽप्यासन् या यावज्जीवनमविवाहिता अधिवसन्ति स्म, यथा चेदमासीत् कुशध्वजकन्या वेदवती नाम । ता अध्यापनकार्यमपि कुर्वन्ति स्म । आचार्या-उपाध्याया-अध्यापिकेत्यादिशब्दानां प्रयोगाः पाणिनिसूत्रेषु परिदृश्यन्ते ।

## समावर्तनसंस्कारः

पञ्चविंशतिर्वर्षावस्थायां ब्रह्मचर्यं पूर्णतामधिगच्छति स्म । एवं छात्रः शुभे मुहूर्ते गार्हस्थ्यजीवनमभ्युपगच्छति स्म, किन्तु गृहस्थधर्मप्रवेशात् पूर्वं तस्य समावर्तनसंस्कारोऽनुष्ठीयते स्म । मध्याह्नेऽध्ययनकक्षाद् बहिर्निर्गत्य क्षौरं कारयति स्म । एवं केशश्मश्रुजटानखादीनां वपनमपि कारयति स्म । छात्रजीवनस्य सर्वा वेषभूषाः, यथा उत्तरीयमधोवस्त्रं मेखला, दण्ड इत्यादयो विसृष्टा अभवन् । सुगन्धिना पवित्रेण जलेन स अस्नात् । एवं नूतनानि वस्त्राण्युष्णीषकुण्डलाञ्जनछत्रोपाहनादिवस्तून्याचार्यादुपलभ्य धृत्वा स्नातकाख्यामभ्यगच्छत् । स माल्येनाप्यलङ्कृतोऽभवत् । अत एव मनुमतानुसारेण 'स्रग्वि' पदाभिधेयतामभजत् । स्नातकत्वं महत्त्वपूर्णमविद्यत । "महद्वै एतदभूद् यः स्नातकः" । एभिः परिधानैः सह बौधायनमतानुसारेण तं रथेनाथवा करिणा सभामण्डप-

मवाहयत, यत्र चाधुनातनमिव स्वाध्यायेऽप्रमादस्य दीक्षान्तोपदेशमुपादिशत। तैत्तिरीयोपनिषदि (१।११) इदमनुशासनं लभ्यते—"सत्यं वद धर्मं चर, स्वाध्यायान्मा प्रमदः, मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, एष आदेशः, एष उपदेशः, एतदनुशासनम्।"

## शिक्षाप्रसारस्य साधनानि

शिक्षाप्रसारस्य कतिपयानि प्रमुखानि साधनान्यभवन्। तेषु सर्वप्रथमम् ऋषिकुलमथवाऽऽचार्यस्य गृहमासीत्, यत्रैकोऽध्यापकः षट् छात्राश्चाभवन्। साधनेषु द्वितीयं साधनं भ्रमणशीला विद्वांस आसन्, ये पर्यटन्तो यत्र तत्रोपदिशन्ति स्म। ते चरकपदाभिधेयतां प्राप्नुवन्ति स्म। तृतीयं साधनं परिषद आसन्, यत्र दश द्वादश वा विद्वांसः सम्मिल्य शिक्षायाः काञ्चिद् जटिलां समस्यां समादधति स्म। अद्यतनानां साहित्यविज्ञानाकादमीनामिवैताः परिषदोऽभवन्। चतुर्थं साधनं तु राज्ञा योजितानि सम्मेलनान्यासन्। सम्मेलनेऽस्मिन् श्रेष्ठा विद्वांसो विचारविनिमयार्थं सम्मिलिता भवन्ति स्म। सम्मेलनस्यैतादृशस्यैकस्य वर्णनं बृहदारण्यकोपनिषदि शतपथब्राह्मणे च वरीवर्तते। सम्मेलनमिदं विदेहेन राज्ञा जनकेनाश्वमेधावसरे आयोजितमासीत्, यत्र कुरुपाञ्चालदेशयोः सर्वे मनीषिण आमन्त्रिताः; यत्र च विदुष्यौ गार्गीमैत्रेय्यौ भागं गृहीतवत्यौ। सम्मेलने चास्मिन् महर्षियाज्ञवल्क्यो विजेता अभवत्। एवं राजा जनकस्तस्मै गवां सहस्रं प्रायच्छत्। गवां शृङ्गाणि स्वर्णमण्डितान्यासन्।

उपरि लिखितसाधनातिरिक्तमठाश्रमविहारसङ्घारामादिभिरपि शिक्षायाः प्रसारोऽभवत्। आश्रमेषु कण्वभरद्वाजदिवाकरमित्राणामाश्रमाः प्रसिद्धतमाः। विहारेषु नालन्दातक्षशिलाविक्रमशिलावलभीसारनाथादयः सुप्रसिद्धाः। विहारेष्वेतेषु द्वारपण्डिता अभवन्, ये प्रवेशमभिलषतश्छात्रान् परीक्षन्ते स्म। परीक्षेयमत्युच्चतमाऽभवत्। यत्र चाशीतिः प्रतिशतं छात्राणां नोदतरत्। विहारेष्वेतेषु शिक्षणस्य व्यवस्था प्रशासनं महास्थविराणामधीनमभवत्। तेषां साहाय्यार्थं शिक्षासमितयो भवन्ति स्म। षोडशवर्षेभ्योऽल्पवयस्काश्छात्रास्तत्र प्रवेशं नालभन्त। नालन्दाविहारो धर्मस्य दर्शनस्य च शिक्षायै प्रसिद्धोऽभवत्। तथैव तक्षशिलाविहार आयुर्वेदस्य धनुर्वेदस्य च शिक्षायै विख्यात आसीत्। विहारा इमे प्रायो विश्वविद्यालयसदृशा एवाभवन्। शिक्षणस्य प्रणाली विचारात्मिकाऽऽसीत्। तेषां भरणपोषणार्थं राजभिरग्रहारा दत्ता आसन्। इमे विहारा बौद्धविद्यायाः केन्द्राण्यासन्। ज्ञानार्जनाय विदेशादपि विद्वांसोऽत्र समागच्छन्ति स्म। एवं विदेशीया नृपतयोऽपि भारतीयान् विदुष आमन्त्रयन्ति स्म। बौद्धदर्शनस्य भारतीयायाः संस्कृतेश्च प्रसारोऽनेनैव प्रकारेण दक्षिणपूर्वेशिया-तिब्बत-चीन-जापान-सिंहलप्रभृतिषु देशेषु जात इति।

## ब्राह्मणविद्याकेन्द्राणि

काशी मिथिला-कश्मीर-नवद्वीपप्रभृतयो ब्राह्मणविद्याकेन्द्राण्यासन् । यत्रान्तराविषयाणामिव वेददर्शनव्याकरणादिविषयाणामप्यध्ययनं प्राचलत् । काशी व्याकरणस्य शिक्षायै, मिथिला न्यायतन्त्रशिक्षायै, नवद्वीपं च तर्कशास्त्रस्य शिक्षायै प्रसिद्धान्यभवन् ।

## अग्रहारः

ब्राह्मणाय प्रदत्तो ग्रामोऽग्रहारसंज्ञया प्रसिद्धोऽभवत् । ग्रामस्यास्यायो विद्याप्रसारकार्ये उपयुज्यते स्म । यथा कर्णाटकस्य कदियूराग्रहारो मैसूरस्य सर्वज्ञपुराग्रहारो वा ।

## टोलानि तथा पाठशालाः

एता वंग-विहार-उत्कल-मगध-काशी-कोशलप्रभृतिषु देशेषु पश्चात् स्थापिता टोलपदवाच्यो भवन्ति स्म । यत्र चैक एवाध्यापकोऽध्यापनकार्यमकरोत् ।

आभिः पद्धतिभिरेव शिक्षितानां स्नातकानां विषये मनुनोक्तम्—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् सर्वदेशेषु मानवाः ॥

---

# श्रीमद्भागवतभाषापरिच्छेदः

चारुदेवशास्त्री

[ होशियारपुरस्थविश्वेश्वरानन्दवैदिकशोधसंस्थानेन विश्वेश्वरानन्दभारतभारती-लेखमालायाम् (१२८) श्रीचारुदेवशास्त्रिणा लिखितः श्रीमद्भागवतभाषापरिच्छेद-नामकः, प्राधान्येन भागवतविषयकशब्दसाधुत्वविचारपरः प्रकाशितो निबन्धोऽविकलं पूर्वपक्षरूपेण प्रकाश्य तद्विषयकविमर्शपरोऽयं श्रीमद्भागवतभाषा-परिच्छेदविमर्शनामकोऽन्यो लेख उत्तरपक्षरूपेण प्रकाश्यते—सम्पादकः ]

"विद्यावतां भागवते परीक्षा" इति प्रथते प्रवादः। तत्र किं नु निबन्धनं स्यात्? सर्गप्रतिसर्गादीनां पुराणप्रतिपाद्यानां विषयाणां दुरधिगमानां निपुणं निरूपणेति चेन्न; तत्र निरूपणायां न किञ्चिदिह नूतनमुपन्यस्तम्। पुराणान्तरप्रपञ्चिता सैवेह सर्गादिवर्णना. सैव स्वर्गापवर्गाद्यतीन्द्रियार्थप्रतिपादना, महदादीनां साङ्ख्योदितानां तत्त्वानां च व्याक्रियेति गहने दर्शनकान्तारे स्वैरं विहरतां कापिलानां काणादानां च का नाम तत्र परीक्षाविडम्बना। अहं तु पश्यामि परोक्षप्रियतया कविना कृतमिदं पुराणमप्रसिद्धशब्दार्थबहुलतया क्लिष्टान्वयतया दुर्घटसमासप्रधानतयाऽध्याहारापेक्षतया व्यवहारातिक्रमजिह्मतया छन्दोनुरोधकृतशब्दवैरूप्यतया छन्दोमात्रगोचरशब्दप्रयोगतया च सत्यं प्रतिहन्ति प्रसरं विपश्चिताम्। अत्र प्रवृत्तास्ते विवक्षितार्थमनर्पयन्ति पदवाक्यानि पदे पदे संमुखमापतन्ति विलोक्य व्यामुह्यन्तीति किं चित्रम्? कविशाब्दिकेन भट्टिना स्वकाव्यावसाने सहर्षोल्लासं "व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्" इति यदुदघोषि तदिहाप्यवितथमिति मूलोदाहरणैः कैरपि निदर्शयिष्यामः, स्वमभिप्रायं च तत्र तत्र विवर्णयिष्यामः। न वयमस्य कवेर्वैदुष्ये वा बाहुश्रुत्ये वा सन्दिह्महे, न चास्य वाच्यधिकारमपलपामः, पुराणान्तरदुर्लभां निरुक्तदोषजातजननीं परोक्षप्रियतामेव न रोचयामहे। नास्य यशसि पुरोभागिनो वयम्। सतो दोषान्नोपेक्षामहे, असतश्च नोत्प्रेक्षामहे। प्रथमं तावत्क्रमोपनतानप्रसिद्धाञ्शब्दानप्रसिद्धानर्थांश्च निर्देक्ष्यामः।

## अप्रसिद्धाः शब्दा अप्रसिद्धा अर्थाश्च

इह पुराणे न केवलं कविभिः पुराणैरप्रयुक्ताः शब्दाः प्रयोगमवतारिता, आभिधानिकैरसङ्गृहीता अपि। अर्था अपि सद्यः समुत्प्रेक्षिताः केचनेति दिङ्मात्रमुदाहरामः—

तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा ॥१।१।१॥

१. अत्र विनिमयशब्दोऽन्योन्यस्मिन् भ्रम इत्यर्थे प्रयुक्तः। तत्र चास्याप्रसिद्धिरिति न, न विदितं विदाम्।

मुहुरहो रसिका भुवि भावुकाः ॥१।१।३४॥

२. अत्र भावुकशब्दो भावनायुक्तं सहृदयं वाऽऽचष्टे। अन्यत्र कल्याणेऽर्थेऽस्य प्रसिद्धिः। तथा चामरः—'भावुकं भविकं भव्यम्" इति पठति। प्रचरन्त्यां हिन्द्यां तु पुराणपरिगृहीतेऽर्थे प्रचुरः प्रयोगः।

दुग्धे मामोषधीर्विप्रास्तेनायं स उशत्तमः ॥१।३।१४४॥

३. अत्र उशत्तम इत्यनेन इष्टतम इत्यर्थं विवक्षति, कर्तरि शतेति च नाद्रियते। एवं —

४. तस्यां नरेन्द्र करभोरुरुशद्दुकूल ····· ॥८।६।१७२॥

एवं धाष्टर्यान्युशति कुरुते मेहनादीनि वास्तौ ॥१०।८।३११॥

५. इत्यत्रापि कमनीयं दुकूलं परिशोधितो वास्तुरित्यभिप्रयन्कतरि शतेति नाद्रियते।

सारङ्ग इव सारभुक् ॥१।१८।७२॥

६. सारङ्गो भ्रमर इतीहार्थः। तत्रास्य प्रसिद्धिर्नेति साहितीजुषः।

नमन्ति यत्पादनिकेतमात्मनः ॥१।४।११॥

७. अत्र पादनिकेत इति पादपीठेऽर्थे प्रयुक्तः। तत्र च नायं प्रसिध्यति।

मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥१।४।१३॥

८. निष्णातेऽर्थे स्नातशब्दोऽप्रसिद्धोऽशक्तश्च।

परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥१।५।७॥

९. अत्रापि सैवाप्रसिद्धार्थता।

ह्यकर्तुरजनस्य च ॥१।३।३५२॥

१०. अजनस्याजन्मन इत्यर्थः। जायते इति जन इत्यर्थे प्रसिद्धिः, जननं जन इत्यर्थे त्वप्रसिद्धिः।

अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ॥१।५।१२॥

११. बृहच्छ्रवा बहुयशा इत्यर्थे प्रयोगः। लोके श्रवःशब्दस्य यशसि रूढिर्नास्ति।

तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥१।५।३३॥

१२. चिकित्साविधिना भावितमित्यर्थे चिकित्सतशब्दप्रयोगः।

सर्वान् मुञ्चति हृच्छयान् ॥१।६।२३॥

१३. हृद्गतवासना इत्यर्थे प्रयोगः। अन्यत्र हृच्छयः काम इत्यनर्थान्तरम्।

वृजिनं नार्हति प्राप्तुम् ॥१।६।४६॥

१४. वृजिनं कष्टमित्यर्थः। अन्यत्र तु वृजिनं पापमित्येवार्थः।

प्रजोपप्लवमालोक्य लोकव्यतिकरं च तम् ॥१।७।३२[१·२]॥

१५. लोकव्यतिकरो लोकविनाश इति विवक्षति । व्यतिकरश्च नात्रार्थे रूढः ।

मायाजवनिकाच्छन्नमज्ञमधोक्षजमव्ययम् ॥१।८।१९[१·२]॥

१६. अज्ञमित्यज्ञातमलक्षितमाह । अज्ञशब्दस्यैषोऽर्थः स्वप्नगम्योऽपि न । एवञ्जातीयान् पदपदार्थान्निबध्नन् कविः काव्यसधर्मेदं पुराणं व्याख्यागम्यमिति गमयति ।

कलेवरं यावदिदं हिनोम्यहम् ॥१।९।२४[२]॥

१७. हिनोमि त्यजामीत्यर्थः । सोऽयमन्यत्र दुर्लभः ।

तुष्टाव जन्यं विसृजञ्जनार्दनम् ॥१।९।३१[४]॥

१८. जन्यं शरीरमित्याह । तत्र चेदमतितरामप्रसिद्धम् ।

स्वनिगममपहाय मत्प्रतिज्ञान् ॥१।९।३७[१]॥

१९. निगमः प्रतिज्ञा । बह्वर्थोऽपि निगमशब्दः प्रतिज्ञां नाह ।

धृतरथचरणः··· ॥१।९।३७[३]॥

२०. चरणश्चक्रम् । अत्र च नास्य रूढिः ।

परिध्युपान्तामनुजानुवर्तितः ॥१।१०।३[४]॥

२१. परिध्युपान्तां समुद्रान्तामाह । परिधिरिति न क्वचित् समुद्रपर्यायेषु पठितः ।

दध्मौ दरवरं तेषां विषादं शमयन्निव ॥१।११।१[३]॥

२२. दरः शङ्ख इति स्वीकरोति । भये श्वभ्रे चास्य प्रसिद्धिः ।

उप्तां फलपुष्पाक्षताङ्कुरैः ॥१।११।१४[४]॥

२३. आकीर्णामिति विवक्षति । प्रपूर्वो वपतिः परापूर्वो वा प्रासने वर्तते, केवलस्तु बीजसन्ताने केशकर्तने वा ।

स्फुरत्पुरटमौलिनम् ॥१।१२।८[२]॥

२४. अत्र पुरटशब्दः स्वर्णवचन उपात्तः । नायं स्वर्णे प्रसिद्धः ।

युष्मत्पक्षच्छायासमेधितान् ॥१।१३।८[२]॥

२५. अत्र पक्षशब्दः पक्षपातेऽर्थे प्रयुक्तः । तत्रार्थे नायं प्रसिद्धः ।

हिमालयं न्यस्तदण्डप्रहर्षम् ॥१।१३।२९[३]॥

२६. न्यस्तदण्डा इति संन्यासिन उक्ताः । नूत्ना शब्दप्रक्लृप्तिः, अर्थस्तु शक्य उन्नेतुम् ।

—क्रमशः

# श्रीमद्भगवतभाषापरिच्छेदविमर्शः*

श्रीरामप्रसादत्रिपाठी, प्राचीनव्याकरण-दर्शनागमविभागाध्यक्षः, वा० सं० वि० वि०, वाराणसी।

यद्यपि श्रीमद्भिर्व्याकरणकाव्यकोषाणां पारंगतैश्चारुदेवशास्त्रिभिः प्रदर्शितानां भागवतीयानां त्रुटीनामुद्धारो दुःशकः, तथापि श्रीमद्भागवते बद्धश्रमतया तदुद्धाराय किमपि प्रयत्यते।

नात्राऽतीव प्रकर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चितानां प्रकाशते॥

इति च निवेद्यते। किञ्चायमपरोऽपि भागवतभाषायां दोषसम्भावनाऽभावप्रकारः। तथाहि संस्कृतसाहित्येऽवान्तरभूतास्तिस्रो भाषाः—एका देवानां वेदेषु प्रसिद्धा अपरा ऋषीणां पुराणेषु धर्मशास्त्रेषु स्मृतिषु सूत्रेषु च, अन्या च मनुष्याणाम्। या च लोके व्यवहाराय प्रयुज्यते, (संकल्पादिवाक्येषु)। व्याकरणं तु लोकव्यवहारे प्रयुक्तानां शब्दानामन्वाख्यानाय प्रवृत्तम् न तु त्वार्षशब्दानाम्। अत एव तत्र तत्रार्षप्रयोगः, छन्दोवत्सूत्राणि भवन्ति—इत्यादिकं व्याकरणसाध्यानां प्रयोगाणां निर्वाहाय प्रयुज्यत इति नास्ति तदुद्धाराय प्रयत्नस्यावश्यकता; तथाऽपि पाणिनीयव्याकरणदृष्ट्याऽपि तदुद्धाराय मम प्रयासो नानर्थकतां व्रजिष्यति; अपि तु सचेतसां मोदायैव भविष्यतीति मन्ये।

## तत्र क्रमशो दोषोद्धारः

१. उ०—अत्र विनिमयशब्दो विनिमयपूर्वके बोधे प्रयुक्तः। अतश्चान्योऽन्यस्मिन् भ्रमः प्रतिफलितो भवति। समाहृतश्च धात्वर्थविषयेऽयं प्रकारो भगवता पाणिनिना "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सूत्रं विदधता। तत्र हि श्लाघादिपूर्वके बोधने श्लाघादिधातूनां प्रयोग इति नाविदितं सचेतसाम्।

किं वा तेजो वारिमृदामिति पदं स्वार्थविषयकबुद्धिपरं लक्षणया, विनिमयशब्दस्तु यथाऽवस्थित एव स्वार्थे इति बुद्धीनां विनिमयेऽन्योऽन्यस्मिन् भ्रम इति फलत आयात्येव।

२. उ०—भावयति अर्थं रसं वा इति भावुकः सहृदयः। अन्तर्भावितण्यर्थादत्र भवतेरुकञ् प्रत्ययः। कोषाद् यदि कल्याणे प्रयोगः, अस्तु नाम; अप्रसिद्धार्थस्यापि प्रयोगः श्लेषादौ दृश्यत एव। कोषश्च तत्रार्थे प्रयोगं समर्थयितुं प्रभवति, न त्वन्यार्थे प्रयोगं वारयितुम्; अर्थाऽ-

---

* उत्तरपक्षपरोऽयं लेखः—सं०।

वधारणे मानाभावात्। किञ्च कल्याणार्थकादेव तच्छब्दाद् मत्वर्थीये अर्शआद्यचि तत्प्रयोगेऽपि को बाधकः ? हे पापे ! पापोऽयं कंस इत्यादौ यथा।

अत एव प्रचरन्ती सैन्धवी (हिन्दी) वागपि संस्कृतजनन्याः स्वभावमनुहरमाणा परमं चकास्तीति न तिरोहितं भाषामर्मविदाम्।

३. उ०—उशत्तमशब्दे 'वश कान्तौ' इत्यस्मात् कर्मणि शतृप्रत्ययः। "कृत्यल्युटो बहुलम्" इत्यत्र बहुलमिति योगविभागात्। अथवाऽस्तु कर्त्रर्येव। पृथवीदोहनादिना प्रजाकल्याणस्य तेनैव (पृथुनैव) पूर्वमिच्छाविषयीकृतत्वात्। तदनु लोकेनाऽपि तस्यावतारस्येष्टतमत्वं फलितमिति कोऽन्वत्र विरोधः ?

४. उ०—अत्राऽपि पूर्ववदेव समाधातव्यम्। इयान् विशेषो यद् दुकूलस्याचेतनत्वेऽत्रेच्छाया असम्भवे कुतः कर्तरि शतेति ? तदप्यापातरमणीयमेव "सर्वस्य वा चेतनावत्त्वात्—ऋषिः पठति, शृणोत ग्रावाणः" इति महाभाष्यीयसिद्धान्तेन सुज्ञानोत्तरत्वात्। एवं च वस्त्रालङ्कारादयो भगवन्तं महालक्ष्मीं वाऽस्मान् धृत्वा कृतार्थयतु भगवान् इति प्रार्थयन्ते, पश्चात्तदिच्छया प्रेरितो भगवानपि तद्धारणायेच्छां करोतीति दुकूलादीनां पूर्वमिच्छाकर्तृतयोशत्ता सम्यगेव, पश्चाच्चोपास्येच्छाविषयताऽपि।

५. उ०—अत्रापि पूर्ववदेव—मयि मेहनादीनि विदधातु भगवान् श्रीकृष्णः, इतीच्छा वास्तुनिष्ठा। मदीयं नवनीतादिकं चोरयतु श्रीहरिरिति गोपाङ्गनेच्छावत्। पश्चात्तदिच्छाधीनेच्छावान् श्रीहरिस्तादृशमाचरतीति वास्त्वादीनामिच्छाश्रयत्वं सदपि फलीभूतमहनीयभगवदिच्छाविषयत्वस्य समक्षं तिरोभूतमिति भक्तिमहत्त्वं प्रकाशयन् व्याख्याकारः परवशः किं कुर्यात् ?

६. उ०—सारङ्गः पशुपक्षिणोरिति शार्ङ्गरवादिगणपाठेनोक्तार्थद्वये[1] एवास्य शक्तिः, अन्यस्मिन्नर्थे तु सारभुगिति विशेषणं प्रयुञ्जानस्य वक्तुस्तात्पर्यानुपपत्त्या योगार्थसादृश्येन च लक्षणैवाङ्गीकरणीया। भ्रमररूपोऽर्थो लक्ष्य एव।

नहि निरूढातिरिक्ते लक्ष्येऽर्थे प्रसिद्धिमन्विष्यन्ति साहितीजुषः। किञ्च पक्षवत्तया मधुकरे शक्तिरपि युज्यत एव। अत एवाद्यत्वेऽपि लोके 'सारङ्ग' 'सरङ्गा' इति वा पदेन मधुमक्षिका व्यपदिश्यन्ते ग्रामिकैरपीति संस्कृतमूलिकेयं परम्परा नूनं प्रसिद्धिं परिचाययति[2]।

७. उ०—निकेतशब्दो निवासेऽर्थे प्रसिद्ध एवेति पादनिकेतशब्दः पादनिवासं वदन् पादपीठरूपमर्थं बोधयिष्यति पूर्ववदेव।

---

१. म० भा० ३।१।१।७।

२. किञ्च भागवतं तु न काव्यम्, अपि तु पुराणमित्यप्रसिद्धिदोषोपन्यासो न युक्तः।

८. उ०—स्नातपदस्य निष्णातरूपेऽर्थेऽपि शक्तिः। निरुपसर्गस्तु तद्द्योतक एव। स्वसमभिव्याहृतपदीयशक्त्यभिव्यञ्जकत्वं द्योतकत्वमिति हि शाब्दिकानां प्रसिद्धिः। एवं च पदान्तरसमभिव्याहारेण तद्द्योतनाय नेरुपसर्गस्याध्याहारः कार्यः। किं वा सत एव तस्य "विनापि प्रत्ययं पूर्वोत्तरपदलोपो वाच्यः" इति वार्त्तिकेन लोपः स्मरणीयः। किं वा पदान्तरसन्निधिरेवीनिपदवत् तादृशीं शक्तिमवद्योतयितुं क्षमते।

किं वा रूपकालङ्कारं प्रकाशयितुं तादृशः प्रयोग इति मन्तव्यम्।

९. उ०—अत्रापि पूर्ववदेव स्मर्तव्यम्।

१०. उ०—अजन इत्यत्र जनशब्दो जन्मवदर्थं इति भवानपि मन्यते। तत्र नञो भेदार्थकतया जनभिन्न इति प्राथमिकोऽर्थो मन्तव्य एव। ततश्च जनत्वात्यन्ताभाववानिति द्वितीयोऽर्थ आर्थिको बोद्धव्यः, भेदस्य प्रतियोगिताऽवच्छेदकात्यन्ताभावेन सह सामनैयत्यात्। घटभेदघटत्वाभावयोर्यथा। अत एवोच्यते—"विद्यावतां भागवते परीक्षा" इति।

११. उ०—नह्यत्र यशसि श्रवःशब्दः प्रयुक्तः, अपि तु प्रसिद्धे श्रवणेन्द्रियरूपे एवार्थे। तद्गतबृहत्त्वं संगमयितुमुक्तम्—बृहुयशा इति। एवं च संख्यादिकृताया बृहत्तायास्तत्र वाद्ये तत्साध्यश्रवणक्रियाकर्मभूतस्य यशसस्तत्तामारोप्य व्यवहारः कृत इति व्यज्यते। भवति चान्यस्य धर्ममन्यत्रारोप्य भूयान् व्यवहारो लोके—गौर्वाहीक आयाति, गां वाहीकं पाठयेत्यादिः।

१२. उ०—चिकित्सितशब्दे बाहुलकात् करणे 'क्त' प्रत्ययः। अथवा गत्यर्थाकर्मकेति सूत्रेऽनुक्तसमुच्चयार्थक'च'शब्दबलेन कर्तरि क्तः। अथवा नपुंसकत्वविशिष्टभावक्तान्तादर्शआद्यच्। साध्यसाधनभावसम्बन्धः षष्ठ्यर्थः। अथवा चिकित्सा सञ्जाताऽस्येति विग्रहे तारकादित्वादितच् प्रत्ययः, सम्बन्धश्च पूर्वोक्त एव।

अथवा कर्मक्तान्ततयाऽऽमयस्य विशेषणत्वमेव प्रयुङ्क्ते, फलतश्च द्रव्ये चिकित्सा साधनताऽपि लभ्यत इति पञ्चस्वपि समाधानेषु न काचन विचिकित्सा।

१३. उ०—हृच्छयशब्दो योगरूढ्या कामार्थकोऽस्तु नाम। योगमात्रशक्त्या हृद्गतवासनायां प्रयोगे नास्ति किमपि बाधकम्। कैरवे प्रयुक्तस्य पङ्कजपदस्येव। "कह्लारकैरवमुखेष्वपि पङ्कजेषु" इत्यादिः प्रयोगो महाकवीनां द्रष्टव्यः।

किं वा कामो हृद्गतवासनाजन्य इति कार्ये प्रयोगमकृत्वा कारणे कृतो लक्षणया इत्यपि नापह्नोतुं शक्यम्।

१४. उ०—कष्टं पापस्य फलमिति कार्ये कारणपदस्य प्रयोगः पूर्ववदेव लक्षणया बोध्यः।

१५. उ०—वि-अति-इत्युपसर्गद्वयपूर्वकाद् विक्षेपार्थकात्। 'कॄ'धातोर्भावेऽप्रत्यय इति व्यतिकरोऽत्र विक्षेपः, स च विनाशस्य हेतुरिति पूर्ववदेव कार्ये कारणपदस्य लक्षणाऽवगन्तव्या। रूढेः प्रसिद्धिहेतुत्वेऽपि न प्रयोगमात्रे हेतुत्वम्।

१६. उ०—ज्ञानं ज्ञाः सम्पदादित्वाद् भावे स्त्रियां क्विप्। नास्ति ज्ञा ज्ञानं चर्मदृशा यस्य तमित्यज्ञातरूपेऽर्थे सुष्ठु प्रयोगोऽस्य शब्दस्य कृतो महाकविना। यद्यपि जानातीति ज्ञः, स न इति अज्ञ इति बहु प्रथितम्, तथाऽपि बहुव्रीहिलभ्यमुक्तमर्थं को निवारयेत्? पदान्तरसन्निधेः प्रकरणस्य वाऽत्र तस्मिन्नर्थेऽभिधानियामकतया वर्तमानत्वात्। नानार्थेष्वीदृश्या एव गतेः सार्वजनीनत्वात्।

१७. उ०—अत्र 'हि' धातोः प्रेषणपूर्वके त्यागे प्रयोगः, धातूनामनेकार्थत्वसिद्धान्तात्। एवं च पञ्चसु भूतेषु 'प्रेषणेन त्यजामि' इत्यर्थे नहि किञ्चिदपि प्रतिबन्धकम्।

१८. उ०—कार्यमात्रे प्रसिद्धस्य जन्यशब्दस्य कार्यविशेषे (शरीरे) प्रयोगोऽप्रसिद्ध इति कथं वक्तुं शक्यते? भवति च सामान्यार्थकशब्दस्य व्यक्तिविशेषप्रबोधाय प्रयोगो लक्षणया। यथा—"त्वामस्मि वच्मि" इत्यादौ, कमलानि कमलानि" इत्यादौ च।

१९. उ०—स्वस्य निगमतुल्यं प्रतिज्ञावाक्यमित्यर्थः। निगमपदस्य निगमसदृशे वाक्ये लक्षणा। "अत्र बह्वर्थोऽपि निगमशब्दः प्रतिज्ञां नाह"—इत्युच्यते भवता। तत्र यदि 'शक्त्या नाह' इत्यत्र तात्पर्यम्, तदा सत्यमिति ब्रवीमि, यदि तु 'लक्षणया नाह' इत्यत्र तात्पर्यम्, तदा रिक्तं वचः, हेतोरनुपन्यास्यात्।

२०. उ०—चरणशब्दो गमनसाधने पादे योगरूढः, चक्रे तु यौगिकः, यथा पङ्कजपदं कैरवे। नहि रूढिर्योगरूढिर्वैव प्रयोगनियामिका, अपि तु योगशक्तिरपीति विद्वदनुष्ठितमर्यादा कथमतिशयितुं शक्या।

२१. उ०—परिधिशब्दो मर्यादासामान्ये वर्तमानोऽप्यत्र भूवाचकद्वितीयान्तगोपदस्य सान्निध्येन भूपरिधौ वर्तते, स च समुद्र एवेति समुद्रपर्यायेष्वपठितेनाऽप्यनेन समुद्रमर्थं बोधयामास महाकविरित्यहो अस्य चातुर्यम्।

२२. उ०—दरेण वरं दरेषु वरमिति वा समासः। दध्मौपदसान्निध्यात् शङ्खमित्यध्याहर्तव्यम्। किं वा दरशब्दो योगरूढ्या भये श्वभ्रे वा वर्ततां नाम, दीर्यते स्वपक्षस्य विषादादिः परपक्षस्य हर्षादिर्वाऽनेनेति योगशक्त्या शङ्खवाचकत्वे का क्षतिः? अत एवाग्रिमे श्लोके "धवलोदरो दरः" इति कथनेन धवलोदरस्य दरविशेषणताऽपि संगच्छते। योगशक्त्या लक्षणया वा बोध्यमानेऽर्थे प्रसिद्धेर्नापेक्षा इत्यस्य सर्वसम्मतत्वात्। किं वा अमरकोषादन्येऽपि सन्ति कोषास्ताननालोच्याप्रसिद्धिकथनं कथं रोचेत?

२३. उ०—वपतिः प्रासनपूर्वके बीजसन्ताने शक्तोऽपि विशेष्यांशस्य बाधे केवले प्रासने लक्षणया वर्तते इति काऽनुपपत्तिः ? अनेकार्था हि धातव इत्यस्याप्युक्तत्वाच्च ।

२४. उ०—पुरटशब्दोऽद्यत्वे स्वर्णे न प्रसिद्धः । नाऽयं श्रीमद्भागवतस्य तन्निर्मातुर्वाऽपराधः । प्रसिद्धौ यत्नः क्रियताम्, सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या वाकोवाक्यमितिहासः पुराणं वैद्यकं चेत्यादि–एतावन्तं शब्दस्य प्रयोगविषयमननुशम्य यदुच्यते अप्रयुक्तः शब्द इति साहसमात्रमेतदिति महाभाष्योक्तिरेवात्र स्मर्तव्या ।

२५. उ०—नह्यत्र पक्षशब्दः पक्षपातेऽर्थे प्रयुक्तः, अपि तु पक्षरूपे स्वार्थे एव, पातेऽर्थे तु छायाशब्दो लाक्षणिकः । "युष्मत्पक्षपातच्छायया" इति श्रीधरस्वाम्युक्तौ छायाशब्देन न षष्ठी-तत्पुरुषः, अपि तु कर्मधारयः, पक्षपातरूपछायया इत्यर्थः । किं वा युष्मत्पक्षस्य छाया साहाय्यं तेन समेधितान्, छायाशब्दस्य साहाय्ये लक्षणा, पूर्वोक्तार्थस्तु फलितः ।

२६. उ०—'न्यस्तदण्डानां प्रहर्षो यस्मिंस्तम्' इति श्रीधराचार्यः । नह्यत्र न्यस्तो दण्डो यैस्ते इति योगशक्त्या संन्यासिन एवाभिप्रेताः, अपि तु प्राणिनां सुहृदो ये केचनेदृशास्त्यक्तभूत-द्रोहा भवेयुः, गृहस्था योगिनः संन्यासिनो वा । एतादृशां कृते हिमालयः प्रहर्षकरो भवति । अत एव त्यक्तद्रोहवृत्तिर्धृतराष्ट्रो गृहस्थोऽपि तच्छब्देन बोध्यत इति । नहीयं वर्गविशेषे नूत्ना शब्दप्रकृतिः, अपि तु यौगिक एवायं शब्दस्तादृशस्वभावे । किं वा न्यस्तदण्डा हि मुनय इत्युक्त्याऽत्रैव ग्रन्थे मुनिविशेषणतयाऽप्युपात्तोऽयं शब्दः । तदर्थेऽभिनवः स्वतन्त्रोऽयं चेत्तर्हि पौनरुक्त्यभिया कथमुभयमुच्चारयेत् ।

—क्रमशः



# अरस्तूमहोदयस्य भरतमुनेश्च नाट्यविषयक-विचारः

डॉ० श्रीजयमन्तमिश्रः, एम्. ए., पी. एच्. डी., व्याकरण-साहित्याचार्यः,
भारतीय-सहयोग-नियोगे त्रिभुवनविश्वविद्यालये संस्कृत प्राध्यापकः ।

यवनदेशस्य प्रसिद्धदार्शनिकः अरस्तूमहोदयः खिष्टपूर्वे चतुर्थशतके (३८४-३२२) स्वाप्रतिमप्रतिभया न केवलं पाश्चात्त्यसभ्यतासंस्कृतिमूलकारणं विविध-दर्शन-ज्ञान-विज्ञानमाविश्चकार, अपि तु काव्यशास्त्रेऽप्यपूर्वां शक्तिं प्रकटयामास । तस्य 'काव्यशास्त्रम्'[१] तथा 'रीतिशास्त्रम्'[२] एतस्मिन् विषये प्रसिद्धं ग्रन्थरत्नमद्यापि विदुषां मानसं मोदयतितराम् ।

प्रायस्तस्मिन्नेव प्राचीनयुगे महामुनिर्भरतो भारतभुवं स्वजन्मनाऽलञ्चकार, तथा ज्ञान-विज्ञान-कला-रत्नाकरं षट्त्रिंशदध्यायम् 'नाट्यशास्त्रम्' प्रणिनाय । भिन्नदेशकालसंस्कृतिष्वेधमानयोरप्युभयोर्नाट्यविषयकविचारे विद्यमाना मौलिकसमानता समालोचकानां चेतश्चमत्करोति । अरस्तूमहोदयस्य कतिपये नाट्य-काव्य-विषयक-विचारा न केवलं भारतीयतद्विषयकविचारानुकूलतां भजन्ते, अपि तु तदभिन्नतामपि प्रतिपादयन्ति । नाट्यस्वरूपम्—

किं वा नाट्यमिति जिज्ञासां समादधता भरतमुनिना 'नाट्यशास्त्रे'—

त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ।[३]
नाना भावोपसम्पन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मयाकृतम् ॥[४]
सप्तद्वीपानुकरणं नाट्ये ह्यस्मिन् प्रतिष्ठितम् ।
देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् ।
कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥[५]
लोकस्वभावानुकरणाच्च नाट्यस्य सत्त्वमीप्सितम् ॥[६]

---

१. ARISTOTLE'S Pocties.
२. RHETORICS.
३. नाट्यशास्त्रे १, १०४ ।
४. तत्रैव १, १०८ ।
५. तत्रैव १, ११८ ।
६. तत्रैव सप्तमाध्याये ।

इत्येवं रूपेण 'लोकवृत्तानुकरणम्', 'अवस्थानुकरणम्' नाट्यमित्यादि बहुशः प्रतिपादयाञ्चक्रे। नाटकं निरूपयता तेन—

सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम्।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम्॥[1]
मृदुशब्द सुखार्थं च कविः कुर्यात्तु नाटकम्।[2]
मृदु-ललित-पदार्थं गूढशब्दार्थहीनं
बुधजनसुखयोग्यं बुद्धिमन्नृत्ययोग्यम्।
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं
भवति जगति योग्यं नाटकं प्रेक्षकाणाम्॥[3]

इत्यादिरूपेण तत्स्वरूपं प्रतिपादितम्।

अनुकरणात्मकस्य रूपकस्य दशसु प्रभेदेषु प्रधानतमस्य नाटकस्य रसाभिव्यञ्जक-मृदुललितशब्दैः शोभनार्थैश्च शरीरं विधेयमिति मुनेः स्पष्टं मतम्।

अत्रेदं विचारणीयम्—

'नाट्यशास्त्रे' भरतमुनिना 'लोकवृत्तानुकरणम्', 'लोकस्वभावानुकरणम्', 'कृतानुकरणम्' इत्यादि यन्नाट्यविषये प्रतिपादितम्, तत्र 'अनुकरणम्' नटद्वारा प्रदर्शितम्, किमनुकार्यस्य कार्यकलपस्याभिनयरूपम्, उताहो कविद्वारा निरूपितं जागतिकपदार्थस्य वर्णनात्मकं कविकर्मरूपम्? एतज्जिज्ञासायाः समाधाने आपाततस्त्विदमेव प्रतिभाति यद् नटद्वारा कृतमभिनयरूपमेवानुकरणं मुनेरभिप्रेतम्, यतस्तदनुसरणकारिणां भट्टलोल्लटाभिनवगुप्तधनञ्जय-धनिकविश्वनाथप्रभृतीनाम्—"मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रसः[4]", "नहि नटो रामसादृश्यं स्वात्मनः शोकं करोति, सर्वथैव तस्य तत्राभावात्, भावेनानुकारत्वात्[5]", "अवस्थानुकृतिर्नाट्यम्[6]", "काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकार-

---

१. तत्रैव २१, १२०।
२. तत्रैव २१, १३१।
३. तत्रैव १७, १२३।
४. काव्यप्रकाशे चतुर्थोल्लासे।
५. अभिनवभारत्याम् ३७ तमे पृष्ठे।
६. दशरूपके १, ७।

श्चतुर्विधाभिनयेन तादात्म्यापत्तिर्नाट्यम्[१]", "अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत्[२]" "अनुकर्तृगतत्वं चास्य निरस्यति"[३] इत्यादिकथनेषु रङ्गमञ्चेऽनुकारकनटेन प्रदर्शितं धीरोदात्तादिनायकानां विविधानामवस्थानामाङ्गिक-वाचकाहार्य-सात्त्विकाभिनयरूपं प्रयोगात्मकमेवानुकरणं प्रतिभाति, परन्तु सूक्ष्मेक्षिकया दर्शनेन नवनिर्माणात्मकं कविव्यापाररूपमप्यनुकरणं भरतमुनेः, तमनुसरतां च विपश्चितां मतमिति निश्चिन्वन्ति समालोचकविचक्षणाः ।

भरतमुनेः—

एतद्रसेषु भावेषु सर्वकर्मक्रियासु च ।
सर्वोपदेशजननं नाट्यमेतद् भविष्यति ॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद् भविष्यति ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत् कर्म नाट्येऽस्मिन् यन्न दृश्यते ॥
सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च ।
अस्मिन्नाट्ये समेतानि तस्मादेतद् मया कृतम् ॥
वेदविद्येतिहासानामाख्यानपरिकल्पनम् ।
विनोदजननं काले नाट्यमेतद् भविष्यति ॥[४]
सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् ॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारजनप्रियम् ॥
सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न योगोऽसौ नाटके यन्न दृश्यते ॥

---

१. तत्रैव अवलोकटीकायाम् ।
२. साहित्यदर्पणे ३, ४८ ।
३. तत्रैव ।
४. नाट्यशास्त्रे १, ११०—११६ ।

यो यः स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
साङ्गाभिनयसंयुक्तो नाट्यमित्यभिधीयते ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥
तदेवं लोकभावानां प्रसमीक्ष्य बलाबलम् ।
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम्[1] ॥

इत्यादिकथनेन स्पष्टं भवति यत् कविव्यापाररूपमपि लोकवृत्तानुकरणं मुनेरभिप्रेतम् । अत एव तेन न केवलं रङ्गमञ्चोपयोगिनां बहिरङ्गरूपाणां चतुर्विधाभिनयानामेव सविस्तरं वर्णनं कृतम्, अपि तु नाट्यान्तरङ्गरूपाणां प्रधानीभूतानां रसभावादीनामपि विशेषरूपेण निरूपणं कृतम् । अत्रेदं विभावनीयम्—

यथैव चानुकार्यवृत्तस्यानुकर्तृभिः कृतमभिनयरूपमनुकरणं तत् तादात्म्यापादनरूपं सदेव शोभनं भवति, न तथा कविभिः कृतं लोकवृत्तानामनुकरणं यथावत् तेषां तद्रूपेण प्रतिपादनम् । किन्तु कविकृतलोकवृत्तानुकरणं कवेः प्रतिभाव्युत्पत्त्यभ्यासात् सृष्टं नवनिर्माणरूपं सदेव सहृदयहृदयाह्लादकं भवति । काव्ये हि कविभिर्वस्तुनस्त्रयाणां रूपाणामनुकरणं क्रियते कर्तुं शक्यते च—

(१) ( कवि-हृदये ) वस्तुनः प्रतीयमानरूपस्य,
(२) वस्तुनः संभाव्यरूपस्य ( यथा तद्रूपं भवितुमर्हति ),
(३) वस्तुन आदर्शरूपस्य ( यथा तेन रूपेण भाव्यम् ) इति ।

एवं च कविकर्मणः साफल्यं वस्तुनः संभाव्यरूपस्यादर्शरूपस्य चानुकरणे एव, यतो हि तत्रैव प्रतिभायाः कल्पनायाश्च समुपयोगो भवति । तथाविधानुकरणेनैव काव्यनिबन्धनं धर्म्यं यशस्यमायुष्यं हितं बुद्धि-विवर्द्धनं लोकोपदेशजननं धर्मार्थकाममोक्षसाधनं च भवति । तेनैव च कविर्वस्तुतः प्रजापतिपदवीं लभते ।

अरस्तूमहोदयेनानुकरणात्मककलासूत्कृष्टतमायास्त्रासदयालक्षणं कुर्वता प्रोक्तम्— "त्रासदी कस्यचिद् गम्भीरस्य, स्वतः पूर्णस्य, निश्चितायामयुक्तस्य कार्यस्यानुकृतिः, यस्या माध्यमं नाटकस्य विभिन्नभागेषु विभिन्नरूपेण प्रयुक्ता सर्वविधालङ्कारैरलङ्कृता भाषा

१. तत्रैव २१, ११८—१२१ ।

भवति, यत्र च त्रासकरुणयोरुद्रेकद्वारा मनोविकाराणां समुचितविरेचनं भवति'" इति। एतल्लक्षणानुसारेण—

(१) त्रासदी कार्यस्यानुकृतेर्नाम।

(२) इदं कार्यं गम्भीरं स्वतः पूर्णं निश्चितायामयुक्तं च भवति।

(३) अस्य कार्यस्य समाख्यानं वर्णनं वा न भवति, अपि तु प्रदर्शनं भवति।

(४) भाषा छन्दोलयगीतादिभिरलङ्कृता भवति[२]।

(५) त्रासकरुणायोरुद्रेकद्वारा तादृशमनोविकाराणां विरेचनं भवति, येन त्रासदयाः प्रयोजनस्यानन्दानुभवस्य सिद्धिर्भवति। अत एव च कारणात् त्रासदया अनिवार्यरूपेण षडङ्गानि भवन्ति, यानि तस्याः सौन्दर्यस्य निर्धारणं कुर्वन्ति। तानि च—(१) कथानकम्, (२) चरित्रचित्रणम्, (३) पदरचना, (४) विचारतत्त्वम्, भावतत्त्वं वा, (५) दृश्यविधानम् (६) गीतं च। एतेषु कथानकम्, चरित्रचित्रणम्, विचारतत्त्वं चानुकृतेर्विषयः, दृश्यविधानम् अनुकृतेर्माध्यमम्, पदरचना गीतं चानुकरणस्य विधिः[३]।

(१) अत्र प्रकरणे स्वकाव्यशास्त्रस्यान्यस्मिन् प्रकरणे चानुकरणार्थे प्रयुक्तः अरस्तूमहोदयस्य 'मीमेसिस' इति शब्दः कल्पनात्मकं पुनर्निर्माणं नूतनसर्जनम्—इत्याद्यर्थमेव बोधयति, न तु वस्तुनो यथावद्रूपस्यानुकरणम्।

"पारमार्थिकसत्यस्यानुकरणं जगत्, तस्यानुकरणं काव्यमित्यनुकृतेरनुकरणतया काव्यं सत्यादतीव दूरतरमतः काव्यं हेयम्" इति प्लेटोमहोदयस्य मतं दूषयन्, काव्यात्मकमनुकरणं न

---

१. Tragedy, then, is, an imitation of an action that is serious, complete, and of a certain magnitude; in language embellished with each kind of artistic ornament, the several kinds being found in seperate parts of the play; in the form of action, not of narrative; through pity and fear effecting the Proper Purgation of these emotions. Poetics VI.

२. By 'language embellished' I mean language into which rhythm, harmony and song enter. Ibidem.

३. Every tragedy, therefore, must have six Parts, which Parts determine its quality—namely, Plot, Character, Diction, Thought, Spectacle, Song. Two of the Parts Constitute the medium of imitation, one the manner, and three the object-of imitation. Ibidem.

यथावदनुकरणम्, अपि तु प्रेयःश्रेयःसमन्वितमादर्शरूपमिति प्रतिपादयँश्च अरस्तूमहोदयोऽनुकरणस्य प्रयोगं न सङ्कुचितार्थे चकार, अपि तु पूर्वप्रतिपादितदिशा भरतमुनेरभिप्रेतार्थे एव। अत एव अरस्तूमहोदयमते इतिहासात् काव्यं भव्यतरम्; यत इतिहासे घटनाया यथावद् वर्णनं भवति, काव्ये तु तस्यास्तथा वर्णनं भवति यथा तया घटनया भाव्यम्। काव्ये दार्शनिकता भवति, अत एवेतिहासादिदं महत्तरम्। काव्यस्य कथावस्तु सार्वभौमं सार्वकालिकं च; इतिहासस्य कथावस्तु देशकाल-विशेष-परिच्छिन्नम्[1]। एवञ्चानुकरणसिद्धान्ते उभयोर्मतं साम्यं भजते।

(२) भाषाः

नाटकस्य भाषाविषये यथा भरतमुनिना—

षट्त्रिंशल्लक्षणोपेत गुणालङ्कारभूषितम्।[2]
शब्दानुदारमधुरान् प्रमदाभिनेयान्,[3]
मृदुललितपदार्थं गूढशब्दार्थहीनम्,[4]

इत्यादिप्रतिपादयता नाटकस्य शब्दप्रयोगैर्गुणालङ्कारभूषितैर्भाव्यमिति निरूपितम् तथैव अरस्तूमहोदयमतेऽपि त्रासदया भाषा छन्दोलयगीतादिभिः सर्वविधालङ्कारैश्चालङ्कृता भवतीत्यनयोर्विचारे परं साम्यं वरीवर्ति।

(३) नाट्य-काव्य-कथावस्तु

भरतमुनिमते—

इतिवृत्तं तु काव्यस्य शरीरं परिकीर्तितम्।
पञ्चभिः सन्धिभिस्तस्य विभागाः परिकीर्तिताः॥
इतिवृत्तं द्विधा·· ··· ।
आधिकारिकमेकं तु प्रासङ्गिकमथापरम्॥[5]

---

१. The true difference is that one ( history ) ralates what has happened, the other ( Poetry ) what may happen. Poetry, therefare, is a more philosophical and a higher thing than history. Ibidem IX.

२. नाट्यशास्त्रे २१, ११८।

३. तत्रैव १७, १२१।

४. तत्रैव १७, १२२।

५. तत्रैव २१, २।

एतच्चेतिवृत्तमितिहासपुराणादिप्रसिद्धं कविकल्पितरूपमुत्पाद्यं चेति द्विविधम्।

अरस्तूमहोदयमतेऽपि कथावस्तु घटनानां विन्यासरूपमेव यच्च कार्यव्यापारानुकरणरूपं भवति। एतच्च कथानकं त्रासदयाः सर्वप्रमुखं वस्तु। एतदेवैतस्या आत्मरूपम्[१]।

कथानकस्यैवंविधमहत्त्वप्रदाने अरस्तूमहोदयस्येयं वाचो युक्तिः—

(१) त्रासदयां न व्यक्तेरनुकरणं भवति, अपि तु कार्यस्य जीवनस्य चानुकरणं भवति।

(२) जीवनं च कार्यव्यापारस्यैवापरं नाम। अतो जीवनस्यानुकृतौ कार्यव्यापारस्यैव प्रामुख्यम्।

(३) सुखं दुःखं वा काव्यजन्यप्रभावस्य स्वरूपम्। तच्च कार्यकलापे एव निर्भरम्, अतः कार्यं कथानकं वा त्रासदयाः साध्यं भवति।

(४) चरित्रचित्रणं कार्यव्यापारेण सह गौणरूपेण स्वत एव समायाति।

(५) कार्यव्यापारमन्तरा त्रासदी न भवितुमर्हति; चरित्रचित्रणं विना भवितुं शक्नोति।

(६) चारित्र्यस्याभिव्यञ्जकानि भाषणविचारादीनि सर्वथा परिष्कृतान्यपि तथा सारभूतकारुणिकप्रभावं नोत्पादयन्ति यथा कथानकानां घटनानां च कलात्मकविधानानि।

(७) त्रासदयाः प्रबलतमं रागात्मकतत्त्वं स्थितिविपर्ययाभिज्ञानरूपं कथानकस्यैवाङ्गम्।

(८) अत एव नवोदितकलाकारा भाषायाः परिष्कारे चरित्रचित्रणे च प्रथमं सिद्धिं लभन्ते, परन्तु कथानकस्य सफलनिर्माणे ते समयमपेक्षन्ते[२]। एतावता अरस्तूमहोदयस्य मते कथानकस्य सर्वाधिकं महत्त्वं सुस्पष्टम्। इदमत्र रहस्यम्—

तत्समये उपलब्धेषु साहित्येषु—(१) कथानकस्य प्रामुख्येण, (२) वस्तुवादिदृष्टिकोणे अमूर्तभावादिवर्णनापेक्षया मूर्तसङ्घटनादिवर्णनस्यैवाधिकमहत्त्वेन, (३) अनुकरणसिद्धान्ते चरित्रचित्रणाद्यपेक्षया कथावस्तुवर्णनस्य सहजतया, (४) रस-भाव-चरित्रवर्णनस्यापि माध्यमतयेतिवृत्तस्यैव सत्त्वेन अरस्तूमहोदयो नाटकादौ कथानकस्यैव माहात्म्यं प्रतिपादयाञ्चकार।

---

१. The Plot, then, is the first principle, and, as it were, the soul of a tragedy. Poeties VI.

२. Ilid.

"इतिवृत्तं तु काव्यस्य शरीरं परिकीर्तितम्" इत्येवं प्रतिपादयता भरतमुनिना नाट्ये शरीररूपेण स्थितात् कथानकात् "नहि रसादृते कश्चिदर्थः प्रवर्तते[1]" इत्येवं प्रतिपाद्य प्रधानीभूतस्य रसस्यात्मरूपत्वं सुस्थिरीकृतम्। एतच्च सर्वथा समुचितम्, यतो हि भारतीये नाट्यदर्शने वस्तु-नायक-रसेषु रस एव प्रधानतमः, 'रसो वै सः' इत्यादिश्रुत्या रसे एवात्मस्वरूपत्वम्, आत्माभिव्यक्तिरूपत्वं च। एवञ्चात्माभिव्यक्तिरूपस्य रसस्य सफलप्रकाशकतयैव कथावस्तुनोऽपि साफल्यम्। अत एव काव्यस्यात्मतत्त्वं रसध्वनिः। भारतीयविचारदृशा कथानकापेक्षया चारित्र्यस्याधिकं महत्त्वम्, चारित्र्यापेक्षया चात्मभूतस्य रसस्य। एवं त्वरस्तूमहोदयस्य विचाराद् भरतमुनेरयं विचारो युक्ततरः।

अपरं च 'नाट्ये रस-भाव-चरित्र-चित्रणापेक्षया कथानकस्यैवाधिकं महत्त्वम्' इत्यरस्तूमहोदयस्य कथनं प्रकारान्तरेणापि न स्वीकर्तुं योग्यम्। एतत्सम्बन्धे तेन यत्तु प्रतिपादितम्—'कथानकेन विना त्रासदी भवितुं नार्हति, किन्तु चरित्र-चित्रणं विना भवितुं शक्नोति' इति, तदपि न सर्वथा समीचीनम्; यतो घटनायाः कर्तृभोक्तृरूपेण पात्रमेव संघटकम्। तद् विना कथानकमेव कथं घटेत? कथानकेन सह पात्राणां मनोवृत्तीनां प्रधानसम्बन्धोऽस्ति। पात्रमनोवृत्तिद्वारैव सामाजिकमनोवृत्तयः प्रेरिताः प्रभाविताश्च भवन्ति। एतत्तत्त्वस्यालेखनमेव चरित्रे चित्रणं नाम। अतश्चरित्रचित्रणं विना कथानकं भवितुमर्हतीति तस्य कथनं न युक्तम्। अत एतदेव कथनं सर्वथा समीचीनं यत् कथानकं रागात्मकतत्त्वस्य वाहकम्, चरित्रचित्रणं तस्याधारः, रसश्च तस्य परिणामः, अर्थाच्चरममुद्देश्यम्।

## (४) कथावस्तुन आयामः

अरस्तूमहोदयस्य मते नाटकीय-कथावस्तुन आयामो यथासंभवं सूर्यस्यैकपरिक्रमणस्य (अहोरात्रस्य) किञ्चित् तदधिकसमयस्य वा सीमायामाबद्धः, यद्यप्यरस्तूमहोदयात् पूर्वस्मिन् काले तथा समय-बन्धनं नासीत्।[2]

एतादृशः कथावस्तुनः सीमित आयामो भारतीये 'नाट्यशास्त्रे' अपेक्षितो नास्ति, अत एव संस्कृतनाटकेषु तादृश-समयबन्धनं नावलोक्यते। कथानकस्य पूर्णतायाः प्रदर्शने एवं समय-सीमा-बन्धनं नाप्युचितं नैव संगतम्।

---

१. नाट्यशास्त्रे रसप्रकरणे।

२. Poetics V.

( ५ ) कथानकस्यैकान्वितिः

यथा भारतीये नाट्यशास्त्रे आधिकारिक-कथावस्त्वाधारीकृत्यैव प्रासाङ्गिकानामन्य-कथानकानां पञ्चसन्धिद्वारा वर्णनस्य विधानं वर्तते, यथा च तेषां समेषां निर्वहणसन्धौ ऐकार्थ्योपनयनद्वारा कार्यान्वितेर्निरूपणं दृश्यते, तथैव अरस्तूमहोदयस्य 'काव्यशास्त्रेऽपि' कथानकस्य एकान्वितेः[1] प्रतिपादनं दृश्यते। अत्रापि मुख्यकथानकस्याङ्गतयैवान्येषां परस्पर-सम्बद्धानां कथानकानां वर्णनेन भवितव्यमिति निरूपितं वर्तते। तत्र कार्यान्वित्या सह स्थानान्विति-कालान्वित्योरप्यावश्यकत्वं प्रतिपादितं विद्यते। परन्तु भारतीये नाट्यशास्त्रे कालान्वितेः स्थानान्वितेश्चोपेक्षैवावलोक्यते; यतः पूर्णकथानक-प्रयोगे एतयोरन्वित्योर्विधानं नैव संभवम्, नापि समीचीनम्।

( ६ ) कथावस्तुनः पूर्णता

अरस्तूमहोदयस्य विचारेणादिमध्यावसानयुक्तमेव कथावस्तु पूर्णम्। तादृशेनैव च पूर्णेन नाटकीयकथावस्तुना भाव्यम्। परन्तु भारतीये नाट्यशास्त्रे उपर्युक्तपूर्णत्वसमन्वितमेव कथावस्तु नाटकस्य साफल्याय न भवति, यदि तेन सहृदय-सामाजिक-जिज्ञासा-परितोषो न जायते। अतो भारतीयमतानुसारेण जिज्ञासापरितोष एव पूर्णताया निकषः।

( ७ ) कथानकस्य संभाव्यता

कथानक-संभाव्यता-विषये उभयोर्मतं समानमेव। संभाव्यतागुणद्वारेणैव कथानकस्य काम्यत्वम्, अन्यथा असंभाव्यतया निरुपाख्यप्रसङ्गापत्त्या तत्र सहृदयानां प्रवृत्तिरेव न स्यात्।

( ८ ) इतिवृत्तस्य सहजविकासः

यथा भरतमुनिमते इतिवृत्तस्य सहजविकासो नाट्यसन्ध्यङ्गद्वारा भवति तथैव अरस्तूमतेऽपि संवृति[2]-विवृति[3]-स्थितिविपर्यया[4]भिज्ञान[5]द्वारा कथानकस्य सहजविकासो भवति।

( ९ ) कुतूहलम्

अरस्तूमहोदयमते नाटकीयकथानके कुतूहलस्य तत्परितोषस्य च निरूपणं नितरामा-

१. Unity of Plot.
२. Complication.
३. Unravelling.
४. Reversal of Situation.
५. Recognition.

वश्यकम्। सामाजिकानां पुरतः कुतूहलोत्पादनाय घटनानामुपस्थित्या अकस्मादेव भाव्यम्, किन्तु तत्र सूक्ष्मरूपेण कार्य-कारणभावेनापि भवितव्यम्[१]।

भरतमुनिना 'नाट्यशास्त्रे' सन्धिप्रयोजन-प्रतिपादनावसरे "आश्चर्यवदभिख्यातम्[२]" इति कथयता कथानके आकस्मिकतायाः कुतूहलस्य प्रतिपादनं कृतम्। 'कौतूहलोत्तरावेशो भवेत्तु परिभावना[३]" इति मुखसन्धेः परिभावनारूपप्रभेदे तथा 'अद्भुतस्य च संप्राप्तिर्भवेत्तदुपगूहनम्[४]" इति निर्वहणसन्धेरुपगूहनरूपप्रभेदे कुतूहलस्य स्पष्टं प्रतिपादनं वरीवर्ति।

त्रासद्याः संघटनार्थं यथा अरस्तूमहोदयेन प्रस्तावनो[५]पाख्यानोप[६]संहाराणां[७] निरूपणं कृतम्, तथा भारतीये नाट्यशास्त्रेऽपि प्रस्तावना-प्रासङ्गिक-कथावस्तु-फलागमादिषु तेषां प्रतिपादनं वर्तते।

एवं च अरस्तूमहोदयस्य भरतमुनेश्च नाट्यविषयकमौलिकविचारेऽतीव साम्यं विद्यते।



---

१. Poetics IX.

२. नाट्यशास्त्रं २१, ५४।

३. तत्रैव २१, ७५।

४. तत्रैव २१, १०३।

५. PROLOGUE.

६. EPISODE.

७. EXODE.

# वेदपदार्थविमर्शः

## ब्राह्मणग्रन्थानां च वेदनामधेयत्वस्याध्ययनम्

श्रीविन्ध्येश्वरीप्रसादत्रिपाठी, व्याख्याता, वेदविभागः, वा० सं० वि० वि०, वाराणसी ।

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः ॥
(शु० य० वे० मा० सं० ३४।५८)

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
(ई० उ० शा० पा०)

ऋग्यजुःसामरूपाय ब्रह्मनिःश्वसितात्मने ।
अनाद्यन्ताय निगमपुरुषाय नमो नमः ॥

ऐहिकामुष्मिककार्यकलापप्रसङ्गेन लौकिकवैदिकभेदभिन्ना द्विविधाः शब्दाः समायान्ति, अस्माकं व्यवहारे । तत्र लौकिकाः शब्दास्तु यथासौविध्यं प्रयोजनवशादेव प्रयुज्यन्तेऽस्माभिः । येन शब्देन वाक्येन वा यस्य यदा प्रयोजनं भवति स एव तदा तं शब्दं वाक्यं वा समुच्चारयति, नान्यस्तदिति ।

"देवदत्त ! गामुपसेवस्व कृष्णां गोग्रासप्रदानादिना" इति शब्दं वाक्यं स एव समुच्चारयति यस्य देवदत्तकर्तृका गोत्वजात्युपलक्षितकृष्णद्रव्यकर्मिका गोग्रासप्रदानादिकरणिका सेवाक्रिया अभिप्रेता भवति, नैवान्यस्तदिति । सर्वैरन्यैर्वा कैश्चित्तद् वाक्यं समुच्चार्यमेव, इत्येवंविधो नास्ति कश्चिन्नियमो विधिः प्रतिबन्धो वा शास्त्रीयोऽत्र । अतो लौकिकानां शब्दानां वाक्यानां च प्रयोजनपूर्वकत्वाद्धेतोस्तेषां कृते स्वरसंस्कारयोरानुपूर्व्यादेर्वा विषयको नियमेन समादरो विधिर्वापि न दृश्यते, न वा क्रियत इति ।

किन्तु पञ्चैव महायज्ञास्तान्येव महासत्राणि—भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति । अहरहर्भूतेभ्यो बलिं हरेत्तथैतं—भूतयज्ञ ँ समाप्नोति—अहरहर्दद्यादोदपात्रात्तथैतं मनुष्ययज्ञ ँ समाप्नोति—अहरहः स्वधा कुर्यादोदपात्रात्तथैतं पितृयज्ञ ँ समाप्नोति—अहरहः स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञ ँ समाप्नोति । अथ ब्रह्मयज्ञः—स्वाध्यायो वै ब्रह्मयज्ञस्तस्य

वाऽएतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधास्रुवः सत्यमवभृथः स्वर्गोलोकऽउदयनं— यावन्त इं ह वा ऽइमां पृथिवीं वित्तेन पूर्णां ददल्लोकं जयति त्रिस्तावन्तं जयति भूयाꣳꣳसञ्चाक्षय्यं-य एवं विद्वान् अहरहः स्वाध्यायमधीते तस्मात्—

स्वाध्यायोऽध्येतव्यः ॥

( शतप० कां० ११ अ० ५ ब्रा० ७।१-३ )

इत्यादिषु स्थलेषु "स्वाध्यायोऽध्येतव्यः। अहरहः सन्ध्यामुपासीत" प्रभृतिचोदनातः, आम्नायधर्मित्वाच्च वैदिका शब्दानां प्रयोगे समुच्चारणे स्वरसंस्कारयोर्नियमः समादरोऽनुशरणं चानुपूर्व्यादीनां महतेऽभ्युदयाय कृतो दृश्यते। वैदिकशब्दविषयकः स्वरसंस्कारादिसमादरो नितरां ख्यातः। स्वरभेदेनार्थभेदोऽपि सुप्रसिद्धः। विख्यातः कृष्णशब्दो वर्णवाची अन्तोदात्तश्च भवति, किन्तु स एव कृष्णशब्द आद्युदात्तश्चेत् स्यात् तदा मृगवाची भवति। यथोक्तं शुक्लयजुःप्रातिशाख्ये—

"कृष्णे मृगसंयोगे"—( २।२५ )

कृष्णशब्दो मृगवचन आद्युदात्तो भवति (इति उ० भा०) अस्योदाहरणानि शुक्लयजुर्वेद-माध्यन्दिनसंहितादिषु सर्वत्रैव बाहुल्येन विराजन्ते।

कृष्णो॑ऽस्याखरेष्ठोग्नये॑त्वा जुष्टं॑ प्रोक्षा॑मि॑··· । शु० य० मा० सं० २।२५।

इति मन्त्रे पठितस्याद्युदात्तस्य कृष्णशब्दस्यार्थविषये "हे इध्म त्वं कृष्णोऽसि कृष्ण-मृगरूपो यज्ञोऽसि। आसमन्तात् खरे कठिने वृक्षे तिष्ठतीति आखरेष्ठः। यद् वा खं स्वर्गं राति ददातीति खरः, आहवनीयस्तत्र आ समन्तात्तिष्ठतीति, आखरेष्ठः। अन्तोदात्तः कृष्णशब्दो वर्णवाची, अयं तु कृष्णशब्द आद्युदात्तत्वान्मृगवाची" इत्युल्लिखति श्रीमान् महीधराचार्यो हि स्वभाष्ये।

**एवं च**

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाशऽआश्विन ऽ कृष्णो रात्र्याऽऋक्षो॑ जतू ऽ सुषिलीका त इतरजनानां जहका वैष्णवी ॥ शु० य० मा० सं० २४।३६। इत्यस्मिन् मन्त्रे तथैतस्य— एणी अह्नः॑ ÷ । मण्डूक॑ ÷ । मूषिका। तित्तिरि॑ ÷ । सर्पाणाम्। लोपाश ऽ। आश्विन ऽ। कृष्ण॑ ÷ । रात्र्यै॑। ऋक्ष ÷ । जतू ऽ। सुषिलीकेति॑ सुषि लीका ते। इतरजनानामितीतरजनानाम्। जहका। वैष्णवी। इति पदपाठे चागतस्य आद्युदात्तस्य कृष्णशब्दस्य।

एणी मृगी अह्नः आलभ्या। मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम्। लोपाशो वनचरविशेषः, आश्विनः अश्विदेवतः। कृष्णो मृगो रात्र्यै। ऋक्षो भल्लूकः, जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः, इतरजनानां देवानाम्। जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या इति महीधरभाष्ये मृग इत्येवार्थः कृतोऽस्ति। किन्तु, अन्यस्य—

खड्गो वैश्वदेवः। श्वाकृष्णः कर्णोगर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिंहो मारुतः कृकलासः पिप्पकाशकुनिस्ते शरव्यायै विश्वेषान्देवानाम्पृषतः॥ शु०य०मा०सं०२४।४०

अस्मिन् मन्त्रे तथा अस्य—

खड्गः। वैश्वदेवऽइति वैश्व देवः। श्वा। कृष्णः। कर्णः। गर्दभः। तरक्षुः ÷। ते। रक्षसाम्। इन्द्राय। सूकरः। सिंहः। मारुतः। कृकलासः। पिप्पका। शकुनि ÷। ते। शरव्यायै। विश्वेषाम्। देवानाम्। पृषतः। इत्यस्मिन् पदपाठे समागतस्य अन्तोदात्तस्य कृष्णशब्दस्य—

[ खड्गो मृगविशेषो विश्वदेवदेवतः। एकः कृष्णः श्वा सारमेयः, द्वितीयः कर्णो लम्बकर्णो गर्दभः, तृतीयस्तरक्षुः, मृगादनः, ते त्रयो रक्षसां पशवः। सूकरः इन्द्राय। सिंहो मारुतः, मरुद्देवतः। कृकलासः सरटः, पिप्पका पक्षिणी शकुनिः पक्षी, ते त्रयः शरव्यायै। एकः पृषतो मृगविशेषो विश्वेषां देवानां पशुर्भवति.................. ..... ..................... ]

महीधरभाष्येऽस्मिन् वर्णवाचकत्वमेव दृश्यते।

स्वरभेदादर्थभेदस्येतिहासोऽपि सुप्रसिद्ध एव—

विश्वरूपाख्ये त्वष्टुः पुत्रे महेन्द्रेण हते कुपितः; त्वष्टा महेन्द्रस्य हन्तारं पुत्रान्तरमुत्पादयितुमाभिचारिकं यागं कृतवान्, तत्र इन्द्रस्य शत्रुः शातयिता हिंसक इति यावत् तथाभूतः सन् वर्धस्व इत्यर्थं प्रतिपादयितुमेव "इन्द्रशत्रुर्वर्धस्व" इति प्रयुक्तम् ( इन्द्रशत्रुत्वस्य विधेयत्वादत्र न सम्बोधनविभक्तिः )। एवं स्थिते इन्द्रस्य शत्रुः शातयिता हिंसक इत्यर्थसम्पादनसमर्थे, इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्त एव उक्तस्तदा पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो जातः फलतः, इन्द्रः शत्रुः शातयिता हिंसको यस्य इत्यर्थो भूतः, अतः सम्पन्नेनापि तेन यागेन समुत्पन्नोऽपि पुत्रो वृत्राख्यः, इन्द्रेणैव हतः। तद्धि स्मर्यतेऽद्याऽपि—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इत्येवमादिस्वरभेदेनार्थभेदस्य लभ्यन्ते चेतिहासा अपि बहवो येषां सङ्ग्रहो महाग्रन्थ एको भविष्यतीति । अस्तु,

## वेदशब्दोऽपि

स्वरभेदप्रयुक्तार्थभेदादेव द्विविधो विराजते । अत एव सार्वभौमवैयाकरणेन भगवता पाणिनिना कृते व्याकरणशास्त्रे एक एव वेदशब्द उञ्छादिगणे वृषादिगणे चेति गणद्वये स्मर्यते ( गण्यते ) "वृषादीनां च" ६।१।२३, "उञ्छादीनां च" ६।१।१६० इति द्वयोः सूत्रयोर्गणपाठे । एको हि 'वेद' शब्दो यो वृषादिगणे पठितः स हि आद्युदात्तः, यश्चोञ्छादिगणे गृहीतः स चान्तोदात्तः । आद्युदात्तान्तोदात्तयोर्वेदशब्दयोरनयोर्मध्ये—

## अन्तोदात्तो वेदशब्दः

वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशुर्वेदिः परशुर्नः स्वस्ति ।
हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमञ्जुषन्ताम् ॥
( अथ० वे० शौ० सं०, कां० ७, सू० २६, मं० १ )

इत्यस्मिन् मन्त्रे तथा एतस्य

वेदः । स्वस्तिः । द्रुऽघनः । स्वस्तिः । परशुः । वेदिः । परशुः । नः । स्वस्ति । हविःऽकृतः । यज्ञियाः । यज्ञकामाः । ते । देवासः । यज्ञम् । इमम् । जुषन्ताम् ।

इत्यस्मिन् पदपाठेऽपि लभ्यते । अत्र वेदपदार्थः ( अस्यान्तोदात्तस्य वेदशब्दस्यार्थः ) कुशमुष्टिरस्ति, यथोक्तं भाष्यकारेणाचार्यसायणेनास्य मन्त्रस्य भाष्ये—

"वेदो नाम दर्भमुष्टिः स्वस्तिः, अविनाशहेतुः अस्माकं भवतु । अयं स्वस्तिशब्दो निपातो गुणमात्रे अविनाशे वर्तते । अत्र मतुब्लोपाद् गुणिनि अविनाशहेतौ वर्तते । अत एव सुबुत्पत्तिः । यद् वा सुपूर्वाद् अस्तेः क्तिनि भूमावाभावश्छान्दसः । द्रुघणः द्रुः द्रुमो हन्यते,

अनेनेति द्रुघणः लवित्रादिः । "[1]करणेऽयोविद्रुषु" इति अब् घत्वं च । स च स्वस्तिः अविनाश-हेतुर्भवतु । परशुः पर्शुः पार्श्वपङ्क्तिः तृणादिच्छेदनी, वेदिः हविरासादनाधारभूता, परशुः वृक्षछेदनसाधनभूतश्च नः अस्माकं—स्वस्तिः अविनाशहेतुर्भवतु । किं च हविष्कृतः हविःसम्पादका यज्ञियाः यज्ञार्हा यज्ञ कामयमानाः । अथ वा हविष्कृतः । षष्ठ्यन्तं पदम् । हविः सम्पादकस्य मम यज्ञकामास्ते प्रकृतरः वेदद्रुघणादयो देवासः देवात्मकाः, इमम् अस्मदीयं यज्ञं जुषन्ताम् सेवन्ताम्" इति ।

अस्यैव मन्त्र, (अथ० वे० शौ० सं०-कां० ७, सू० २९, म० १)मन्त्रपदपाठ-मन्त्रभाष्योक्तस्य वेदशब्दस्यान्तोदात्ततां स्मरति भगवान् पाणिनिः, "उञ्छादीनां च" ६।१।१६० इति सूत्रेण । यथास्य सूत्रस्याधोऽङ्कितायां स्वकाशिकावृत्तौ सुस्पष्टयति जयादित्यवामनाचार्यः[2]—"उञ्छ इत्येवमादीनामन्त उदात्तो भवति । उञ्छः, म्लेच्छः, जञ्जः, जल्पः—एते घञन्ता इति ञित्स्वरः प्राप्तः ( इत्यादि उक्त्वा )······वेग-वेद-बन्धाः करणे । हलश्चेति घञन्ता एते करणे अन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव"······इत्यादि । तस्माद् अन्तोदात्तो वेदशब्दोऽयं कुशमुष्टिवाचकत्वेन प्रवर्तते, यो हि—

विद्यते लभ्यते कर्मसम्पत्तिरनेनेति विग्रहे 'विद् लाभे' इति तुदादिगणपठिताद् धातोः पुंसि संज्ञायां करणे "हलश्च" ३।३।१२१ इति सूत्रेण घञा निष्पादयितुं शक्यते । कुशमुष्टिरूपोऽयं वेद एकपञ्चाशत्कुशपरिमितो मध्यभागे मोटनेन ( मोटनद्वयकरणेन ) उपविष्ट-वत्सजान्वाकृतिवद् बद्धः प्रदक्षिणावृत्तो भवति, याज्ञे कर्मणि चोपयुज्यते । तत्र च वेदोऽयं पशुरूपफललाभकामनायां वत्सजानुसदृशः क्रियते । ब्रह्मवर्चसकामनायां त्रिवृतो वेण्याकारो वा निर्मीयते । अन्नाद्यकामेन मूताकारश्च क्रियते ( धान्यावापपात्रं तृणवर्त्यादिनिर्मितं मूत इति ), यथाह कात्यायनश्रौतसूत्रे—"निरूप्याज्यं वेदोऽसीति यजमानो वेदं करोति" १।३।२२; "कुशमुष्टिं सव्यावृत्तं वत्सजानुं तृवृतं मूतकार्यं वा" १।३।२३ । अनेन कुशमुष्टिरूपेण वेदेन दर्शपूर्णमादिषु श्रौतयागेषु भस्मादाय तेन भस्मना पुरोडाशाच्छादनं तथा पुरोडाशादिसंलग्न-

---

१. पा० सूत्रम् ३।३।८२, एपु हन्तेः करणेऽप् स्याद् घनादेशश्च । अयो हन्यनेऽनेनेत्ययोघनः विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैपा कुठारस्य । दुर्वृक्षः । इति वैयाकरणसिद्धान्तकौमुद्याम् पृ० ५५९ उत्तरकृदन्ते ।

२. अयादित्यवामनाचार्यौ सुस्पष्टयत इति वा जयादित्यश्च वामनश्चेति द्वौ, आचार्यौ चेतू काशिकाकारौ तदा ।

भस्मापोहनादिकार्यं क्रियते तदनन्तरं च यजमानपत्नी एनं वेदं प्रमुच्य शिथिलबन्धनं विधाय गार्हपत्यस्याग्नेः, उत्तरत आरभ्य वेदेः पूर्वान्तं यावत्स्तृणात्यपि यथाह कात्यायनः —

पत्नी वेदं प्रमुञ्चति 'वेदोसीति' योक्त्रं च 'प्रमा मुञ्चामि वरुणस्य पाशाद्येन माऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टा मा सह पत्या दधात्विति ३।८।२।

स्तृणात्यावेदेः ३।८।३ [ होता गार्हपत्यस्योत्तरतः आरभ्य वेदेः पूर्वान्तं यावद् वेदं स्तृणीयात्, अभि विधावाङ् ]

वेदोऽयं ( कुशमुष्टिः ) स्तूयतेऽपि :—

वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽ
भवस्तेन मह्यं वेदो भूया॥ ॥ शु. प. मा. सं. २।२१

हे कुशमुष्टिनिर्मित पदार्थ ! त्वं वेदोऽसि ऋगाद्यात्मकोऽसि। यद्वा वेत्तीति वेदः ज्ञातासि। हे देव द्योतनात्मक वेद ! हे वेद येन कारणेन त्वं देवेभ्यः ( षष्ठ्यर्थे चतुर्थी ) देवानां वेदोऽभवः ज्ञापकोऽभूः तेन कारणेन मह्यं मम वेदो भूयाः ज्ञापको भव। इति महीधरभाष्यम्।

मनुनापि

वेदशब्देन कुशमुष्टिरिष्यते यतो हि स्नातकधर्मप्रकरणे

वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले॥ मनु० ४।३६

अत्र श्लोके पठितस्य "वेदम्" इति पदस्य कुशमुष्टिम् इत्येवार्थो मन्वर्थमुक्तावल्यां मनुस्मृतिटीकायां कृतोऽस्ति।

वृषादीनां च ६।१।२३ इति पा० सूत्रस्य काशिकावृत्तौ "वृष इत्येवमादीनामादिरुदात्तो भवति" इत्युक्त्वा निर्दिष्टो वृषादिगणः —

[ वृषः, जनः, ज्वरः, ग्रहः, हयः, गयः, एते सर्वे पचाद्यच्प्रत्ययान्ताः। गय इत्यत्र गायतेर्निपातनात् एत्वम्। नयः, तयः, पयः, वेदः, अंशः, दवः, एतेऽपि तथैवाच्प्रत्ययान्ताः। सूद इगुपधादिति क प्रत्ययान्तः। गुहाभिदादिरङ् प्रत्ययान्तः। शम-रणौ संज्ञायां सम्मतौ भावकर्मणोः। शमो भावे रणः कर्मणि अजन्तावेतौ निपातनात् भावकर्मणोर्भवतः। मन्त्रः पचाद्यजन्तः। शान्तिरिति क्तिनन्तः। कामः, यामः, घञन्तावेतौ। आराधाराकाराभिदादयः। वह्नो गोचरादिषु घप्रत्ययान्तः। कल्पः, अजन्तः। पादो घञन्तः। तत्र क्वचित्प्रत्यय स्वरः

प्राप्तः क्वचित्कर्षात्वतो—घञन्त उदात्त इति, वृषादिराकृतिगणः। अविहितमाद्युदात्तत्वं—वृषादिषु द्रष्टव्यम् ] इति।

अत्र वृषादिगणे पठितो वेदशब्दः, अपरः! अयं च वेदशब्दः, आद्युदात्तो यो हि अथर्ववेदे।

यस्मात् पक्वादमृतं सम्बभूव यो गायत्र्याऽअधिपतिर्बभूव।
यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनातितराणि मृत्युम्॥
( अथ० वे शौनकसंहिता ४ को. ३५ सू. ६ मं. )

इत्यस्मिन् मन्त्रे तथा अस्य मन्त्रस्य :—

यस्मात्। पक्वात्। अमृतम्। सम्ऽबभूव। यः। गायत्र्याः। अधिपतिः। बभूव। यस्मिन्। वेदाः। निऽहिताः। विश्वऽरूपाः। तेन। ओदनेन। अति। तराणि। मृत्युम्। इति पदपाठे लभ्यते। मन्त्रोऽयं गोर्यमलजननलक्षणाद्भुतशान्तौ गोरभ्युक्षणे तस्या एव गोर्दुग्धे स्थालीपाकं श्रपयित्वा होमे च विनियुक्तः, अतो होम प्रसङ्गे स्थालीपाकौदनं प्रत्युच्यतेऽनेन मन्त्रेण।

## मन्त्रस्यास्य सायणभाष्यम्

पक्वात् ( पाकात्पक्वाद् ) यस्मात् ( ओदनात् ) अमृतम् ( द्युलोकस्थम् ) सम्बभूव। य ( श्च ) गायत्र्याः ( छन्दसामग्रिमायाः ) अधिपतिः ( अधिदेवता ) बभूव ( भवति )।

यस्मिन् ( ओदने ) वेदाः ( ऋग्यजुःसामाद्याः ) विश्वरूपाः ( शाखाभेदेन आसादित-वैश्वरूप्याः ) निहिताः ( निक्षिप्ताः, अन्तरवस्थिता इत्यर्थः ) पक्वात् इति "पचो वः" इति निष्ठातकारस्य वत्वम्।

अत्र सायणभाष्ये यो हि अर्थो वेदशब्दस्य निर्दिष्टः स चार्थः पूर्वोक्तात् वेदपदार्थात् सर्वथैव भिन्नः। अतः अर्थभेदात् शब्दोऽपि भिन्नः। अयं हि वेदशब्दः "वृषादीनां च" ६।१।२०३ इति पा० सूत्रेण आद्युदात्तो भवति।

## आद्युदात्तो वेदशब्दश्चायम्

( क ) अदादिगणे पठितात् परस्मैपदिनः 'विद् ज्ञाने' इत्यस्मात्।

( ख ) दिवादिगणे पठितात् आत्मनेपदिनः 'विद् सत्तायाम्' इत्यस्मात्।

( ग ) तुदादिगणे पठितात् उभयपदिनः 'विद्लृ लाभे' इत्यस्मात् ।

( घ ) रुधादिगणे पठितात् आत्मनेपदिनः 'विद् विचारणे' इत्यस्मात् ।

वा धातोः, पुंलिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवतीत्यर्थकेन "पुंसि संज्ञायां घः" ३।३।११८ इति पा० सूत्रेण पुंलिङ्गयोः करणाधिकरणयोरभिधेययोः, अर्थे घ-प्रत्ययं कृत्वा तथा नन्द्यादेर्ल्युः ग्रहादेर्णिनिः पचादेरच् इति विवेकात् "नन्दि-ग्रहि-पचादिभ्यो ल्युणिन्यचः" ३।१।१३४ इति पा० सूत्रेण अच्प्रत्ययं च विधाय, कर्तृभिन्ने कारके संज्ञायां विषये धातोर्घञ् प्रत्ययो भवतीत्यर्थकेन "अकर्त्तरि[1] च कारके संज्ञायाम्" ३।३।१९ इति पा० सूत्रेण कर्तृभिन्ने कारके घञ्प्रत्ययं वा कृत्वा अथवा भावे वाच्ये धातोर्घञ्प्रत्ययो भवतीत्यर्थकेन "भावे" ३।३।१८ इति पा० सूत्रेण भावेऽपि घञ्प्रत्ययं कृत्वा निष्पादयितुं शक्यते ।

एवं हि एतद्वेदशब्दनिष्पादनकल्पनायां निष्पादकानां शास्त्राणां साहाय्येन धातूनामर्थविचारेण च लाभपदेन जीवनरूपा स्थितिः सत्तापदेन उत्पत्तिः ( घञ्प्रत्ययस्य भाव अकर्त्तरि कारके चापि विहितत्त्वात् ) ज्ञानम्, ज्ञानसाधनम् ज्ञानकर्म ज्ञानाधिकरणम् । सत्ता सत्तासाधनम् सत्ताकर्म सत्ताधिकरणम् । स्थितिः स्थितिसाधनम् स्थितिकर्म स्थित्यधिकरणम् इत्यादयो बहवोऽर्थाः वेदशब्दस्य आयान्ति । अत एव वेदशब्दस्य निर्वचनानि वृत्त्यर्थावबोधकवाक्यानि च बहुविधानि दृश्यन्ते विदुषामाचार्याणां चेति :—

( क ) "वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दत तद्वेदस्य वेदत्त्वम्" ( तै० सं० १।४।२० ) ।

( ख ) "वेदेन वेदिं विविदुः पृथिवीम्" ( तै० ब्रा० ३।३।९ ६६ ।

( ग ) "विदन्त्यन्यप्रमाणावेद्यं धर्मलक्षणमर्थं यस्मादिति वेदः" इति मनुस्मृति २।६-भाष्ये मेधातिथयः ।

( घ ) "विदन्ति अनेन धर्ममिति वेदः" इति अमरकोश १।५।३ टीकायां क्षीरस्वामिनः ।

---

१. यद्यपि "अकर्तरि च" कारके संज्ञायाम् इत्यनेन कर्तृभिन्ने कारके करणेऽपि घञ्प्रत्ययं कृत्वा वेदशब्दो व्युत्पादयितुं शक्य इति प्रतीयते, किन्तु तदा ( करणे घञ्प्रत्ययं कृते ) वेदशब्दस्य अन्तोदात्तता भविष्यतीत्यपि न विस्मरणीयम् ।

काशिकावृत्तौ "उञ्छादीनां च" ३।१।१६ इति पा० सूत्रे उञ्छादिगणनिदर्शने·······वेग-वेद-चेष्ट-बन्धाः, करणे, हलश्चेति घञन्ता एते करणे अन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव, इति सुस्पष्टमेवोक्तत्वात् । अन्तोदात्ततायां वेदशब्दः कुशमुष्टिविशेषवाचको भविष्यतीति प्राङ्निर्णीतमेवेति दिक् ।

( ङ ) "विदन्ति धर्मादिकमनेनेति वेदः" इत्यमरकोशटीकायां सर्वानन्दोऽपि ।

( च ) "विदन्ति अनेन धर्ममिति वेदः" इत्यभिधानचिन्तामणौ १०६ पु. हेमचन्द्राः ।

( छ ) "वेदयति धर्मं विन्दन्त्यनेन वा धर्ममिति" ( वेदः ) इति तु सत्याषाढश्रौतसूत्र-व्याख्यायां महादेवकृतवैजयन्त्याख्यायाम् ।

( ज ) १—वेदनं वेदः ( ज्ञानं वेद इत्यर्थः ) ।

२—विद्यते ज्ञायते वेद्यते ज्ञाप्यते अनेनेति वा वेदः ( ज्ञानसाधनप्रमाणभूतो वेद इति ) ।

३—विद्यते वेद्यते वा यः स वेद, अर्थो वेदः इत्यपि केचित् ।

( झ ) नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति पिप्पलादश्रुतिरिति विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे श्रीमदानन्दतीर्थमुनयः ।

( ञ ) वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपायाः येन स वेद इति कात्यायनश्रौत-सूत्रभूमिकायां ४ पृष्ठे महामहोपाध्यायाः श्री पं० विद्याधरशर्माणः ।

( ट ) इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति सायणाचार्योऽपि कृष्णयजुर्वेदभाष्यभूमिकादिषु ।

तत्रैव

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एवं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥ इत्यभियुक्तोक्तिरपि ।

तस्मादस्य, आद्युदात्तस्य "वेद" शब्दस्य वाच्योऽर्थः (वेदपदार्थ इति यावत्) स्वयम्भुवा उत्सृष्टा अनादिनिधना नित्या दिव्या अपौरुषेया वाक् यतश्च इमाः सर्वाः प्रवृत्तयो विलसन्ते । उक्तञ्च :—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति

इयमलौकिकाबाधितानधिगतार्थबोधकानुपूर्वी वाग् अपौरुषेयः शब्दराशिविशेषः ग्रन्थ-राशिविशेषो वा ब्रह्मण आरभ्य अद्य यावत् परम्परया आर्यजनैः वेदश्रुतिनिगमागमाम्नाय-समाम्नायछन्दःप्रभृतिशब्दैरुच्यते समाद्रियते ।

## वेदपदार्थोऽयम्

व्यष्टिरूपेण मन्त्रनाम्ना संहितानाम्ना ब्राह्मणनाम्ना पृथक् पृथक् ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेद इति तथा समष्टिरूपेण वेदः श्रुतिः छन्दः, आम्नायसमाम्नायः,

निगमः, इत्याद्यभिधेयैश्च प्रायः तिलेषु तैलमिव सर्वविधसर्वभारतीयवाङ्मये सर्वत्रैव चर्च्यंते देशान्तरीयेषु वाङ्मयेष्वपि साधु संस्मर्यंते। भारतीयजनतासु अयमेव वेदः (वेदपदार्थः) आविद्वद्गोपालाङ्गनासु प्रसिद्धस्तेषां यथाकथञ्चिद् भवतु किन्त्ववश्यमेव चर्चाया विषयो भवति प्रत्यहमधुनापि तदध्ययनाध्यापनानुशीलनप्रक्रियाया नितरां ह्रासकालेऽपीति नाविदितं केषामपि।

## सृष्टौ

सर्वेभ्योऽधिकं महत्त्वं सर्वेभ्योऽधिकमुत्कृष्टं स्थानमस्यैव अपौरुषेयस्य नित्यस्य शब्दराशिरूपस्य वेदस्येति।

## अयं वेदो हि सृष्ट्याधारः

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद् गहनं गभीरम् ॥१॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥२॥

( ऋ० १०।१२९ मं० १–२ )

इति नासदीयसूक्तप्रसिद्धः स्वधया (मायया) सह वर्तमानः तत्पदवाच्यः परमेश्वरः (ब्रह्म) एकोहं बहुस्य इति स्थितौ आदौ ब्रह्माणं विधाय तस्मै (ब्रह्मणे च) एनामेव वेदवाणीं सर्वस्मात्पूर्वं प्राहिणोत् इति श्वेताश्वतरीयश्रुतितो ज्ञायते।

यो वै ब्रह्माणं विदधाति पूर्वं
यो वै वेदाँश्च प्रहिणोति तस्मै ॥ इति।

( श्वेताश्व० ६ अ० १८ )

ततो वेदवाणीलाभानन्तरं ब्रह्मा वेदशब्दैरेव जगत्सृष्टिमकार्षीत् जगत्स्रष्टुं प्राभूदिति। ब्रह्माण्डरूपं सर्वमिदं प्रपञ्चजातं वेदादेव (वेदापदार्थादेव) प्रसिद्ध्यति सर्वमुत्पद्यते वेदो हि सर्वभूतानि बिभर्त्ति स्वज्ञातारं सेविनं श्रद्धालुं च कर्मजाद्दोषात्सर्वथैव निर्लिप्तं करोति, इति मनुस्मृत्यादिभारतीयवाङ्मयमुखेन परम्परागतश्रद्धाविश्वासानुभवप्रसिद्ध्या च ज्ञायते।

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥
( मनु० १।२१ । )

अन्यत्रापि

नामरूपे च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ इति ।
( निरुक्तप्रस्तावनायां पृ० ४ )

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिद्ध्यति ॥ मनु० १२।९७ ॥
शब्दस्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्मतः ॥ मनु० १२।९८ ॥
बिभर्त्ति सर्वभूतानि वे॰शास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ मनु० १२।९९ ॥
यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ मनु० १२।१०१ ॥

सृष्ट्यादौ वेदोऽयं समस्तः ( एक एव ) आसीत् । परमेश्वरः सृष्टिकार्यार्थं तं समस्तमेव वेदं ब्रह्मणे प्राहिणोत् । ब्रह्मा च महर्षिभ्यो वशिष्ठादिभ्यो महर्षयश्च स्वस्वपुत्रशिष्येभ्यः तेषु वशिष्ठो हि साकल्येन स्वपुत्राय शक्तये प्रादात् । शक्तिश्च स्वात्मजाय पराशराय, पराशरश्च स्वसूनवे श्रीश्रीकृष्णद्वैपायनाय व्यासाय ) द्वापरादौ प्रायच्छत् । व्यासश्च मानवानां समस्तवेदग्रहण-धारणक्षमताया उत्तरोत्तरह्रासमनुभूय तं समस्तमेकभूतं वेदं चतुर्धा व्यस्य चतुर्भ्यः स्वशिष्येभ्यः पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः, ऋग्वेद-यजुर्वेद-सामवेदाथर्ववेदनाम्ना प्रदत्तवान् । तत्र ऋग्वेदं पैलः, यजुर्वेदं वैशम्पायनः सामवेदं जैमिनिः, अथर्ववेदं सुमन्तुश्च प्राप्तवान् । सम्प्राप्य चैनान् वेदान् तेऽपि स्वस्वशिष्येभ्यः प्रायच्छन् । वैशम्पायनशिष्यो दैवरातो याज्ञवल्क्यो भगवन्तमादित्यं तपसा समाराध्य, तस्मात् अपराणि शुक्लान्यपि यंजूषि लब्ध्वा स्वस्य पञ्चदश-शिष्येभ्यः काण्वमध्यन्दिनादिभ्यः समुपदिदेश । यानि काण्व-माध्यन्दिनादिपञ्चदशशाखारूपेण तत्त-न्नाम्ना जगति ख्यातानि । एवं बहुशाखाभिन्ना भगवन्तो वेदाः जगत्यवतीर्णाः ऋग्वेद-यजुर्वेद-सामवेदार्थर्ववेदेति नाम्ना प्रथिता विराजन्ते ।

वेदावतारस्यायं क्रमः; आदित्यसम्प्रदायगर्भितो ब्रह्मसम्प्रदायः ( आदित्यपरम्परा-गर्भिता ब्रह्मपरम्परा वा ) उच्यते । आदित्यपरम्परागर्भितब्रह्मपरम्परानुसारमेव ब्रह्माणमारभ्य

अद्य यावत् वेदानामध्ययनाध्यापनकार्यम् अविच्छिन्नस्वरवर्णोच्चारणपद्धतिमनुसृत्यैव धर्मभावनया प्रचलति । "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्च" इति स्वाभाविकधर्मनिष्ठया भगवान् वेदः समाराध्यते ।

## भारतीया वयम्

भगवन्तं वेदं परमेश्वरनिःश्वासतया परमेश्वरमेव ततो वाधिकमिति कृत्वा जानीमः । एते वेदा हि ब्रह्मनिःश्वासरूपाः सकलब्रह्माण्डाधारभूताः, अध्येतृपरम्परया अध्ययनाध्यापनयोरविच्छेदे सत्यपि कस्यचित् कर्त्तुरस्मरणात् अपौरुषेयाः सर्वज्ञानविज्ञानैकखनयो धर्मार्थकाममोक्षैकहेतवः सर्वतन्त्रस्वतन्त्राः प्रमाणान्तरानपेक्षाः स्वतः प्रमाणाभूताः, अस्माकमार्यजातीनां सर्वस्वभूताः श्रीमन्तो भगवन्तो वेदाः सृष्टिकालादारभ्य अद्य यावत् भारतीयानामस्माकं कृते सर्वप्रमाणमूर्धन्यत्वेन सर्वमान्याः परमादरभाजः सन्तीति नाविदितं कस्यापीति ।

## किन्तु

एतदपि सत्यमेवास्ति यन्मध्ये, इमे भगवन्तो वेदाः केषाञ्चित् भारतीयानामपि हेयदृष्टिपथं गतवन्तः । ते तु तेषां वेदानां विषये तदानीम्—

"त्रयो वेदस्य कर्त्तारो भाण्डधूर्तनिशाचराः ।"

एतस्यापि कथने कथमपि सङ्कोचं नानुभूतवन्तः । एतदेव नहि कालप्रभावात् कार्यकारणवशात् ।

चतुर्विंशत्यवतारेषु परिगणितेन, महाकवेर्जयदेवस्य [ निन्दसि यज्ञविधेरहरहः श्रुतिजातम्, सदयहृदयदर्शितपशुघातम्... ] इत्यादिपद्ये संस्तुतेन, अष्टादशपुराणकर्त्तृभिर्महामुनिव्यासदेवैः भागवते :—

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥

इति सूचितेन महाविष्णोरवतारेण भगवता बुद्धेनापि यज्ञविधिनिषेधमुखेन तिरस्कृताः, तत्पश्चात् तदनुयायिनश्च केचित् भगवतो बुद्धस्य वास्तविकमुद्देश्यमबुद्ध्वैव निःसङ्कोचभावेन वेदमार्गस्य खण्डने नितरां प्रवृत्तास्तदानीं माधवशब्देन—

सशिष्यसङ्घाः प्रविशन्ति राज्ञां गेहं तदादि स्ववशे विधातुम् ।
राजा मदीयोऽजिरमस्मदीयं तदाद्रियध्वं न तु वेदमार्गम् ॥

( शङ्करदिग्विजये स० ७ श्लो० ६१ )

इत्युच्चैर्घोषितवन्तः । मतमिदं राजाश्रयमपि समवाप । अन्येऽपि शैवतान्त्रिकसम्प्रदायाः कापालिकाः शिवपुराणे व्रतधरा इति ख्याता ये तेऽपि स्वमते, एव रममाणाः, गुरुमेवैकं पदं तत्त्वं मन्वानाः—

मन्तो ण तन्तो ण अ किं पि जाणं झाणं चणो किं पि गुरुप्पसादा ।
मज्जं पिआमो पलिलं रमामो मोक्खं च जामो कुलमग्गलग्गा ॥

इत्युद्घुष्य अवशिष्टा अपि भारतीयप्रजाः प्रायो विपथमेव नीतवन्तः । वेदाश्च सर्वथैव अनादरतां गताः सन्तः काशिराजकस्य वाक्येन

( किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति )

इति चिन्ताया विषया अप्यभूवन् । ततस्तु मनोराज्ञायाम्—

( ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मौ हि निर्बभौ )

इत्यत्र सर्वथैव अमीमांस्या अपि वेदा मीमांस्यतां गताः ।

## तथापि

स्वनामधन्यैः कुमारिलभट्टैस्तदनुयायिभिर्मण्डनमिश्रप्रभृतिभिस्त्यागमूर्तिभिर्विद्वद्वर्यैश्च स्वस्वाध्यवसायेन विलक्षणबुद्धिवैभवेन एवं च अनन्तश्रीविभूषितैः श्रीमदाद्यशङ्कराचार्यैश्चावतीर्य स्वकीयेन अलौकिकमहिम्ना भारतीयजनतायाः श्रद्धा वेदानां विषये यथापूर्वमेव प्रतिष्ठापिता । अतस्तेषां विषयेऽस्माकं श्रद्धा विश्वासो यथापूर्वमेवास्ति । वयं हि भारतीयाः श्रीमन्तं भगवन्तं वेदं "स्वयम्भू साक्षात् श्रीमन्नारायण" इति कृत्वा मन्यामहे ।

वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुमः । महा०

इत्यस्माकं धारणा । वेदा हि अस्माकं धर्मस्य सभ्यतायाः संस्कृतेः राष्ट्रगौरवस्य धार्मिकदृष्टया क्रियमाणानां सर्वविधपूजापाठहोमजपयागसंस्कारकर्मणां दिव्यौजस्तेजोबलशक्तीनां सञ्चयोपचयोः ।

## एवं च

सर्वविधमानवतायाः शिक्षणसंवर्धनयोः, जगत्कल्याणसाधकस्य सार्वभौमाध्यात्मिकबलस्य च परमाधारभूताः सन्तीति नाविदितं प्रेक्षवताम् ।

## अस्तु

एतादृशाः महत्त्वपूर्णा वेदा मन्त्रात्मका एव उत मन्त्रब्राह्मणोभयात्मकाः ? वेदपदेन मन्त्राः ( संहितानुपूर्व्यः ) एव गृह्यन्ते, आहोस्वित् ब्राह्मणान्यपि । ब्राह्मणभागस्यापि वेदनामधेयमस्ति न वेत्यस्याध्ययनं सर्वथैव स्थानेऽस्तीति कृत्वा तत्र प्रयते ।

तत्र श्रुति-निगमाम्नाय-समाम्नायच्छन्दःप्रभृतिशब्दैर्निर्दिश्यमानो वेदोऽयं भगवान् मन्त्रब्राह्मणोभयात्मकः। वेदपदेन यथा मन्त्रभागो गृह्यते तथैव ब्राह्मणभागोऽपि। ब्राह्मण-भागोऽपि मन्त्र एवेति राद्धान्तः। तथापि ब्राह्मणभागस्य अवेदत्वख्यापनार्थं केषाञ्चित् क्रियमाणाः प्रयत्ना अपि साधारण्येन उपेक्षणीया न सन्ति। ते हि—

अत्र कश्चित्पृच्छेद् यत्

यदि मन्त्रभाग इव ब्राह्मणभागोऽपि वेद एव तर्हि तस्य (ब्राह्मणभागस्य) अवेदत्व-सिद्धये (अवेदत्वख्यापने) क्रियमाणेन प्रयत्नेन तेषां प्रयत्नकर्तॄणां को लाभो येनाकृष्टास्ते ब्राह्मणभागस्यावेदत्वप्रसिद्धये प्रयतन्ते ? इति। एतादृशे प्रश्ने मया इदमेव उत्तरिष्यते —

यत् भारतवर्षस्य सार्वभौमं जगद्गुरुत्ववैभवमसहमानानां भारतीयायाः संस्कृतेः सभ्यतायाश्च विद्वेषिणां विदेशिनां तथा केषाञ्चित् परकीयाचारविचारपरतन्त्राणां भारतीयानामपि बहोः कालात्, अयमुद्घोषो यो वर्तते यत्—

आर्यजनाः (भारतीया हिन्दव इति ये उच्यन्ते ते) नहि भारतवर्षस्य मूलनिवासिनः। इमे तु ई०पू०तः सार्धसहस्रत्रितयवर्षेभ्यः, सहस्रचतुष्टयवर्षेभ्यो वा पूर्वमुत्तरपश्चिमतो भारते समायाताः, समागत्य चेमे मूलनिवासिनो जनान् विजित्य तेषां संस्कृतिं सभ्यतां चोन्मूल्यात्र स्वस्थितिं कृतवन्तः। पूर्वमिमे मध्य-एशियायामवर्त्तन्त। किन्तु तत्रत्याया जनसंख्याया वृद्धेः (कारणात्) खाद्यसामग्रीणामभावाच्च यदा तेषां तत्र निवसनं कठिनमभूत्तदा तेषां विभिन्नः समुदायः पृथक् पृथक् गन्तुमियेष। यः समुदायः पश्चिमं गतस्तस्य वंशजाः साम्प्रतिकाः यूरोपियन-राष्ट्रमूलनिवासिनः। ईरानं भारतं च ये समागतास्तेषां वंशजाः ईरानिनो भारतीया आर्या वा समभूवन्। भारतस्य विशेषपरिस्थितौ यस्याः सभ्यतायाः संस्कृतेर्धर्मस्य च विकासो जातः, स एव पश्चात् हिन्दूसंस्कृतिः हिन्दूसभ्यता हिन्दूधर्मो वा नाम भेजे। एतस्य भारतप्रविष्टसमुदायस्य सर्वाधिकनिधिर्वेदो नाम। तत्राऽपि विशेषत ऋग्वेद एवास्ति, यत्र चार्याणाम् ई०पू०सहस्र-चतुष्टयवर्षप्राचीनजीवनस्य विषये अस्तव्यस्तरूपेण किञ्चित् किञ्चित् ज्ञातुं शक्यते, नास्त्येतेषां कापि व्यवस्थिता मर्यादिता परम्परा, इतिहासश्च। आर्याणां पूर्वजा असभ्या जङ्गलिन आसन् इति।

अस्मिन्नुद्घोषे एतस्य लिपिबद्धरूपेण प्रकाशने प्रचारणे ग्रामीणपाठशालात आरभ्य विश्वविद्यालयं यावत् सम्यक्प्रकारेण पठनपाठनक्रमे सन्निवेशने यो हि लाभस्तेषामासीदभूच्चास्ति च तादृश एव कश्चिल्लाभः "ब्राह्मणभागो न वेदः" इति कथने तत्प्रचारस्य प्रयत्ने चाप्यास्ते,

यस्य विवृत्तिकरणं प्रेक्षावतां कृते नापेक्षितमस्ति, किन्तु ब्राह्मणभागस्य अवेदत्वख्यापनार्थं तैस्तैः कैश्चित् कृतेन प्रयत्नेन समुत्पन्नभ्रमात् ब्राह्मणभागो हि वेदोऽस्ति न वेति संशयमग्ना बहवो जिज्ञासन्ते तत्र तत्र किमपि। तेषां तत्तज्जिज्ञासायाः समाधानार्थं ( ब्राह्मणभागस्य वेदनामधेयत्वविषयकाणां समुत्पन्नानां संशयानां छेदनार्थं ) लोकमतस्य ( सम्प्रदायतः प्रसिद्धेः ) शास्त्रमतस्य ( शास्त्रतः ) प्रसिद्धेरध्ययनमत्यावश्यकमास्ते तदेवात्राध्येष्यते।

## तत्रादौ लोकमताध्ययनम्

लोके सर्वेऽपि पदार्थाः प्रायः लोकप्रसिद्धया एव विज्ञायन्ते। त्रिपाठिन इमे ब्राह्मणाः सरयूपारीणाः शुक्लयजुर्वेदिनः कान्यकुब्जा मैथिला महाराष्ट्रा द्राविणा गुर्जराः; क्षत्रियोऽयं सूर्यवंशी चन्द्रवंशी, शूद्रोऽयं देवदत्तस्य पुत्रो यज्ञदत्तस्य प्रपौत्रो, गजा इमे, सिंहोऽयमश्वा इमे इत्यादितत्तत्पदवाच्याः यावन्तः सन्ति ते सर्वे हि यथा परम्परातो लोकप्रसिद्धिवशादेवास्माभिर्बुध्यन्ते, तथैव ब्राह्मणभागोऽपि वेद एवेत्यपि सर्वैरप्यस्माभिर्बुध्यते सम्प्रदाय( लोकपरम्परा )-प्रसिद्धिवशादिति।

## तच्चेत्थम्

सम्प्रति देशेऽत्र यावन्तो वेदाध्यापका वेदाध्यायिनो वैदिकाः सन्ति, ते सर्वेऽपि गुरुमुखादेवाधीतवन्तोऽधीयते चापि यतो हि वेदाध्ययनपरम्परायां साक्षाद् गुरुमुखादेवाध्ययनस्य माहात्म्यमस्ति। स्वयं तथा अभ्यासार्थमधीयानादन्यं वा कश्चिदध्यापयतस्तदनुमतिं विनैव वेदं यो गृह्णाति तं निन्दन्ति धर्मशास्त्रकाराः—

ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते॥ मनु० २।११६॥ इति

## वेदानामध्ययनाध्यापनं कार्यम्

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥ इति ( श्लोकवा० वाक्याधिकरणे )

इति गुर्वध्ययनपूर्वकमिति सम्प्रदायमनुसृत्यैव बहोः कालादद्ययावदविच्छिन्नरूपेण प्रचलति। वेदाध्ययनाध्यापनस्यायं क्रमः ब्रह्मण आरभ्य अद्ययावत् अविच्छिन्नमेव समागच्छति। नहि तादृशः कालोऽभूत्, यत्रेयं वेदाध्ययनाध्यापनपरम्परा सर्वथैव छिन्ना भूता। यासां वेदशाखानां सा परम्परा छिन्ना, सा छिन्ना एव, किन्तु यासां परम्परास्ति, तासां तादृशी एव विराजते।

वर्तमाने वेदाध्ययनस्य शुद्धे परम्पराक्रमे सर्वेऽपि ते वेदाध्यायिनो मन्त्रभागमिव ब्राह्मणभागमपि वेदमिति ज्ञात्वैव "स्वाध्यायोऽध्येतव्यः" इति विधेश्चरितार्थतासिद्धये समधीयते। ब्राह्मणभागमपि वेद इत्येव कथयन्ति। "स्वरसंस्कारयोश्छन्दसि नियमः" इत्यस्य समादरं ब्राह्मणभागकृतेऽपि कुर्वन्ति। ते हि केवलं मन्त्रभागमेव वेदं न मन्यन्ते, अपि तु ब्राह्मणभागमपि। मन्त्रभागो ब्राह्मणभागो द्वावपि सम्भूयैव वेद इत्येव सर्वेषां वेदाध्यायिनां धारणा। ते मन्त्रभागमिव ब्राह्मणभागमपि वेदाध्ययनमध्यपातिहस्तस्वरप्रदर्शनादिविशेषविधिसहितं सस्वरं पठन्ति पाठयन्त्यपि। ब्राह्मणग्रन्थस्याध्यापने अध्ययने संहिताग्रन्थाध्ययनाध्यापनविधिप्रयुक्तान् सामान्यान् विशेषाँश्च सर्वानेव नियमान् निर्वहन्ति। तेषां बुद्धौ यथा मन्त्रभागः ( संहिता ) वेदस्तथैव ब्राह्मणभागो ( ब्राह्मणानि ) अपि वेद एव।

अतः सम्प्रदायप्रसिद्धया ( लोकपरम्पराप्रसिद्धया ) ब्राह्मणग्रन्थाः ( ब्राह्मणानि ) वेद एवेति सिद्धयति। लोकमतमिदं सर्वविदितं प्रामाणिकं परमप्राचीनं च।

## शास्त्रमताध्ययनम्

अतः परं शास्त्रमतं शास्त्रप्रसिद्धया ब्राह्मणभागस्य ( ब्राह्मणानां ब्राह्मणग्रन्थानां ) वेदत्वं ( वेदनामधेयत्वं ) समध्येष्यते। शास्त्रेषु धर्मशास्त्रस्य, तत्रापि मनुसंहिताया विशेषमहत्त्वं सर्वैरपि दीयते। कथ्यते च यच्छतसहस्रश्लोकात्मकं धर्मशास्त्रं विरचय्य भगवते मनवे स्वयं भगवान् परमेष्ठी एव प्रोवाच। तद्धि संक्षिप्य स्वायम्भुवो भगवान् मनुश्च तद् भृगवे प्रोवाच, तदेव लोके मनुस्मृतिनाम्ना प्रथितमास्ते। धर्मशास्त्रप्रणेतृभिर्गौतमपराशरवशिष्ठप्रभृतिभिर्महात्मभिः प्रमाणतया अस्याः स्वीकृतत्वात् 'यन्मनुरवदत्तद्भेषजं भेषजतायाः" इति श्रुत्युपग्रहाच्च धर्मशास्त्रं मनुस्मृतिर्हि महामहिमवती।

## मनुस्मृतिमतेऽपि

ब्राह्मणभागस्य वेदत्वेन प्रसिद्धिः सृष्ट्यारम्भकालत एवास्ति। यतो हि निरुक्तकारो यास्काचार्यो निरुक्तस्य तृतीयाध्याये प्रथमपादे "अथैनां दुहितृदायाद्य उदाहरन्ति" "पुत्रदायाद्य इत्येके" इत्यस्मिन्प्रकरणे—

अविशेषेण पुत्राणां दायो भवति धर्मतः।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥

इत्यत्र "मनुः स्वायम्भुवो विसर्गादौ अब्रवीत्" इत्यनेन मनुं विसर्गादौ ( सृष्ट्यादौ ) वर्तमानं मन्यते। यस्य नाम्नेयं स्मृतिः प्रथिता वर्तते। मनुस्मृतेः प्रवक्ता भृगुरपि सृष्टिकालिक एवेति, एतद्धि—

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतिं प्रजानामसृजं महर्षीनादितो दश॥ मनु० १।३४।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वशिष्ठं च भृगुं नारदमेव च॥ मनु० १।३५।

इति मनुवचनेन ज्ञायते। अतो मनुस्मृतिः सृष्ट्यादिकाले प्रणीतेति सुतरां सिद्ध्यति। तस्यां मनुस्मृतौ 'उदिते जुहोति' 'अनुदिते जुहोति' 'समयाध्युषिते जुहोति' इत्येवं रूपं ब्राह्मण-ग्रन्थमात्रोपलभ्यमानमुदितानुदितहोमविषयकं (ब्राह्मण-) वाक्यम्—

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः॥ मनु० २।१५।

इति वैदिकं मन्यते। तत्रैव पुना राजधर्मप्रकरणे मनुस्मृतावेव—

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः।
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत्॥ मनु० ७।९६।

इति वचनस्यापवादभूतं सुवर्ण-रजत-भूमि-रत्नाद्यपकृष्टं धनं तु राज्ञे एव समर्पणीयमिति सिद्धान्तस्य समर्थनार्थं हि —

"इन्द्रो वै वृत्रं हत्वा" इत्युपक्रम्य 'स महन् भूत्वा देवता अब्रवीत् उद्धारं समुद्धरत" इति, इदं ब्राह्मणवाक्यम्—

राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग् जितम्॥ मनु० ७।९७।

इति वचनेन वैदिकमेव मन्यते मनुः। आर्यसमाजस्य प्रवर्तकाः सुप्रसिद्धाः स्वामिदयानंद-सरस्वतीमहाराजा अपि मनुस्मृतिग्रन्थं सृष्ट्यादौ प्रणीतं मन्वते। ते हि स्वसत्यार्थप्रकाशाख्यस्य ग्रन्थस्य एकादशे समुल्लासे १७२ पृष्ठे कथयन्ति यत्—

[ यह मनुस्मृति, जो सृष्टि की आदि में हुई है, उसका प्रमाण है। ]

अनेन वाक्येन मनुस्मृतेः सृष्ट्यादौ प्रणयनं स्वामिपादानामप्यभिमतमस्ति इति विज्ञायते। अतस्तत्र मनुस्मृतौ ब्राह्मणवाक्यानां वैदिकत्वस्वीकरणं प्रमाणयति यत् सृष्ट्यादित

एव ब्राह्मणभागस्य वेदत्वेन ( वेदपदवाच्यत्वेन ) प्रसिद्धिरस्तीति । सृष्ट्यादिप्रणीता मनुस्मृतिर्ब्राह्मणभागस्य वेदनामधेयत्वं सर्वात्मना स्वीकरोतीति ।

## मीमांसादर्शनमताध्ययनम्

विदितचरमेवैतद् यन्मीमांसादर्शनमस्ति ह्येकं सर्वदर्शनेष्वतिप्राचीनं दर्शनं नाम । मीमांसादर्शनमेतत् ब्रह्मैव प्रजापतये प्रोवाच, प्रजापतिश्चेन्द्राय, सोऽप्यग्नये, स च वशिष्ठाय, वशिष्ठश्च शक्तये, शक्तिश्च पराशराय, पराशरश्च श्रीश्रीकृष्णद्वैपायनाय व्यासाय । एवं परम्परातः समायातमिदं मीमांसादर्शनं कर्मकाण्डज्ञानकाण्डैतदुभयात्मकं वेदवाक्यानां परस्पराविरोधेन तात्पर्यमभिदधत् स्वात्मानमभेदेन प्रकाशयत् जगत्यां प्रचलितमासीद् यादृशं तादृशमेवैतद्दर्शनम्। सोऽपि भगवान् बादरायणो व्यासः जैमिनये समुपादिक्षत् ।

## तदनु भगवान् जैमिनिश्च

अधोदशामुपगतायां वेदविद्यायां ह्रासमुपगच्छति च भारतीयानां बुद्धिवैभवे, लुप्तप्राये च वेदविद्याध्ययनाध्यापनप्रचारे, प्रवृद्धे चाज्ञानान्धकारे तमोगुणरूषिततया याथार्थ्येन बिम्बोद्ग्रहणासमर्थे च मानवमानसमुकुरे; नामशेषेषु च वैदिककर्मकाण्डेषु, वैदिकवर्णाश्रमोचिताचारेषु; अस्तगिरिशिखरावलम्बिनि च त्रयीप्रामाण्यसहस्रांशौ, ग्लायमाने च भारतस्य प्राणभूते भगवति सनातने वैदिकधर्मे तत्संरक्षणार्थं ( स एव भगवान् जैमिनिः ) कर्मकाण्डात्मकं तद्दर्शनं यत् सूत्रेण प्रणिनिनाय उपनिबबन्ध, तदेव पूर्वमीमांसादर्शनं मीमांसादर्शनं वा नाम्ना प्रसिद्धम् । अथातिक्रान्ते बह्वीयस्यनेहसि जनान् मन्दमतीन् ( केवलसूत्राक्षरैरेव देशान्तरीयकालान्तरीयातिन्द्रियादिदुरूहार्थवेदवाक्यानां सम्यक् अवबोधे सर्वथैव ) असमर्थान् विलोक्य, तस्य मीमांसादर्शनस्य सूत्रव्याख्यानरूपं सुविस्तृतं सुलभावबोधं सरलार्थं च भाष्यं रचयामास शबरस्वामी । अयं श्रीशबरस्वामी शालिवाहनशकारम्भात् प्राक्तनः, शकवत्सरारम्भात् प्रायः शतद्वयात्पूर्वमभूदिति ऐतिह्यविदां मतम् । शबरस्वामिविरचितं पूर्वमीमांसादर्शनभाष्यं शाबरभाष्यमिति ख्यातं महत्त्वपूर्णं प्रामाणिकं चेति कस्य नामाविदितं विदुषः ।

## शाबरभाष्यस्यापि

नेत्राष्टरसपरिमिते २८६ शकाब्दे ( अङ्कानां वामतो गतिरिति रीत्या २८६ शतद्वयषडशीतिमिते शकाब्दे ) श्रीकुमारिलभट्टः तन्त्रवार्तिकं नाम व्याख्यानमकार्षीत् । तच्च प्रथमपादे श्लोकवार्तिकम्, ततो निवितान्तं ( तृतीयाध्यायतृतीयपादान्तं यावत् ) तन्त्रवार्तिकम् , तदग्रे

टुप्टीकेति नाम्ना प्रसिद्धम् (अनुष्टुप्टीका, संक्षिप्ततया टुप्टीकेति अथवा टुप् इत्यल्पार्थे अव्ययम्, टुप् इति टीका टुप्टीका इत्येवं कथ्यते)।

## तस्य कुमारिलभट्टस्य मतमनुसृत्यैव

पार्थसारथिना शास्त्रदीपिकाऽपि रचिता। एतैः पूर्वोक्तैस्त्रिभिः (शबरस्वामि-कुमारिलभट्ट-पार्थसारथीति नामकैः) पूर्वमीमांसासम्प्रदायप्रवर्तकैः श्रद्धेयचरणैराचार्यैः समुपबृंहितं मीमांसा-दर्शनं नाम वैदिककर्मकाण्डविषयकविचारमुख्यं सम्प्रति पूर्वमीमांसेति नाम्ना प्रसिद्धं महाकायं दर्शनं सर्वदर्शनेषु परमाभ्यर्हितरूपेण तिष्ठति।

## अत्रपूर्वमीमांसादर्शने

अथातो धर्मजिज्ञासा १।१।१ इत्यारभ्य "अन्वाहार्ये च दर्शनात्" इत्यन्तानि सन्ति वेदवेदाङ्गनेत्रपरिमितानि (हिन्दीभाषायां दो हजार छ सौ चौआलिस) २६४४ सूत्राणि, अध्यायाश्च द्वादश (१२)। तत्र तृतीय-षष्ठ-दशमाध्यायेषु प्रत्यध्यायं सन्ति अष्टौ अष्टौ पादाः, इतरेषु ६ नवस्वध्यायेषु चत्वारश्चत्वार एव पादाः सन्ति। सर्वान् पादानाहृत्य ६० षष्ठि-पादा वर्तन्ते।

## अत्र सर्वत्रैव वेदवाक्यानामेव विचारो वर्तते

न खलु पौरुषेयव्यपदेश्यानां स्मृतीतिहासादीनामिति मीमांसादर्शनेन वेदवाक्यान्येव विचार्यन्त इति सर्वसाधारणेष्वपि विद्वत्सु प्रसिद्धिः। तत्र ब्राह्मणभागगतानि वाक्यान्येव उदाहृतानि विचारितानि, मन्त्रभागस्य वाक्यानि तु तत्र अङ्गुलिगणनीयान्येव (क्वाचित्कानि) सन्ति। मीमांसादर्शनं च साक्षात् वेदव्यवस्थास्थापनपरं शास्त्रम्। अत्र वेदव्यवस्थाप्रकाशनार्थमेव ब्राह्मणभागावलम्बनं कृतमेभिर्दार्शनिकमुनिभिः। तस्मात् यदि ब्राह्मणभागो वेदत्वेन नाभिमतोऽभविष्यत्तदा "मीमांसा नाम वेदवाक्यविचारः" इति परिभाषणमपि नाभविष्यत्। अतोऽपि सिद्ध्यति ब्राह्मणभागोऽपि वेद एव। ब्राह्मणग्रन्थानामपि वेदनामधेयत्वमस्त्येव।

## सूत्रदृष्ट्या मीमांसायाः, ब्राह्मणभागस्य वेदत्वम्

मीमांसादर्शने भावशब्दो विधायको नेति सम्परीक्ष्य, कोऽयं मन्त्रो नामेति शङ्कामुत्थाप्य "तच्चोदकेषु मन्त्राख्या" २।१।३२ इत्यनेन वेदैकदेशमन्त्रभागस्य लक्षणं कृत्वा जैमिनिः "शेषे ब्राह्मणशब्दः" २।१।३३ इति सूत्रेण ब्राह्मणलक्षणमपि व्याजहार। सूत्रस्यास्याभिप्रायोऽयमेव यत् मन्त्रभागादवशिष्टं वेदैकदेशं ब्राह्मणमित्याचक्षते, यथाह शबरस्वाम्यपि एतत् २।१।३३-सूत्रस्य भाष्ये :—

"मन्त्राश्च ब्राह्मणं च वेदः। तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वात् ब्राह्मणलक्षण-मवचनीयम्, मन्त्रलक्षणेनैतत्सिद्धम्। यस्यैतल्लक्षणं न भवति तद् ब्राह्मणमिति परिशेष-सिद्धम्"।

तस्मात् जैमिनिमते मन्त्रभाग इव ब्राह्मणभागोऽपि वेद एव, अन्यथा "शेषे ब्राह्मणशब्दः" (२।१।३३ मी. द.) इति उपर्युक्तसूत्रगतं शेषपदं चानर्थकं स्यात्। अत्र "तच्चोदकेषु मन्त्राख्या" (२।१।३२) इति मी. द. सूत्रेण मन्त्रलक्षयितुः सूत्रस्य प्रकरणे "शेषे ब्राह्मणशब्दः" २।१।३३ इति सूत्रगतस्य शेषपदस्य अन्यार्थकरणे महती असङ्गतिः सम्पतिष्यति।

## यतो हि यथा

'वाराणसेयसंस्कृतविश्वविद्यालयस्य वेद-व्याकरण-न्यायवैशेषिकज्यौतिष-साहित्यविभागाः शेषविभागाश्च' इत्युक्तौ शेषविभागा इति पदेन शेषविभागा वाराणसेयसंस्कृतविश्वविद्यालयस्यैव उक्ता भविष्यन्ति, न तु गोरखपुरविश्वविद्यालयस्य, नापि काशीहिन्दूविश्वविद्यालयस्य, नान्यस्य कस्यचिदन्यस्य विश्वविद्यालयस्य वा।

## तथैव

अत्र उपर्युक्ते मीमांसासूत्रप्रकरणे शेषपदेनोक्तो ब्राह्मणभागो वेदात् भिन्नस्यान्यस्य कस्यचित् शेषो भवितुं नार्हति इति।

## यदि च कश्चित्

"शेषे ब्राह्मणशब्दः" (२।१।३३) इति सूत्रगतं शेषपदं दृष्ट्वा ब्राह्मणं वेदाद् भिन्नं मन्येत तदा तदपि नोचितम्, यतो हि नह्यत्र प्रकरणे पूर्वसूत्रे "तच्चोदकेषु मन्त्राख्या" (२।१।३२) इत्यत्र केवलं वेदलक्षणं तथा द्वितीयसूत्रे "शेषे ब्राह्मणशब्दः" (२।१।३३) इत्यत्र च ब्राह्मणलक्षणं वा कृतं वर्तते, अपि तु अत्र वेदस्य उभयोर्भागयोः पृथक् पृथक् लक्षणं कृतमस्ति। यद्यत्र द्वितीयं भागं (ब्राह्मणभागं) वेदात् पृथक् मन्येत, तदा प्रथमोऽपि भागो (मन्त्रभागोऽपि) वेदात् पृथगेव मन्तव्यो भवेत् तुल्यन्यायात् तदा तु न वा ब्राह्मणभागो वेद इत्यभिमतो भवेत्, न वा मन्त्रभागोऽपि। पुत्रार्थं तपश्चरन्त्या भर्ताऽपि नष्टः, इति दशा भवेत् [ गये रहे हरिभजन को ओटन लगे कपास ] इति च स्यात्।

---

अभिधानस्य चोदकेष्वेवं जातीयकेष्वभियुक्ता उपदिशन्ति, मन्त्रानधीमहे, मन्त्रानध्यापयामः, मन्त्रा वर्तन्त इति मी. द. ४३४ पृष्ठे ( वाराणसेयसंस्कृतविश्वविद्यालयसरस्वतीभवनस्य )।

स्मृतस्योपेक्षानर्हत्वम्

इति न्यायेनात्र प्रसङ्गसङ्गत्यैव किञ्चिद् विशिष्य कथनमपि रुचिकरमेवेति मत्वा आत्मनस्तोषाय प्रतिपाद्यस्य विषयस्य पक्षस्य दार्ढ्यार्थं चोच्यते देशधर्मदृष्ट्या ।

अस्माकमयं भारतवर्षः महादेशो यस्य वर्णनं मैत्रेयं प्रति महर्षिपराशरस्योक्तौ विष्णुपुराणस्य द्वितीये अंशे तृतीयाध्याये गीताप्रेसप्रकाशितविष्णुपुराणे १४३ पृष्ठे ह्येवं दृश्यते :—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ॥१॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने ।
कर्मभूमिरिदं स्वर्गमपवर्गं च गच्छताम् ॥२॥
महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥३॥
अतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात्प्रयान्ति वै ।
तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा मुने ॥४॥
इतः स्वर्गश्च मोक्षश्च मध्यं चान्तश्च गम्यते ।
न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते ॥५॥
भारतस्यास्य वर्षस्य नव भेदान्निशामय ।
इन्द्रद्वीपः कसेरुश्च ताम्रपर्णो गभस्तिमान् ॥६॥
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥७॥
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरात् ।
पूर्वे किराताः यस्यान्ते पश्चिमे यवनाः स्थिताः ॥८॥
ब्राह्मणाः क्षत्रियाः वैश्या मध्ये शूद्राश्च भागशः ।
इज्यायुधवाणिज्याद्यैर्वर्तयन्तो व्यवस्थिताः ॥९॥
शतद्रुचन्द्रभागाद्या हिमवत्पादनिर्गताः ।
वेदस्मृतिमुखाद्याश्च पारियात्रोद्भवा मुने ॥१०॥
नर्मदा सुरसाद्याश्च नद्यो विन्ध्याद्रिनिर्गताः ।
तापीपयोष्णीनिर्विन्ध्या प्रमुखा ऋक्षसम्भवाः ॥११॥

गोदावरी भीमरथी कृष्णवेण्यादिकास्तथा ।
सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ॥१२॥
कृतमाला ताम्रपर्णी प्रमुखा मलयोद्भवाः ।
त्रिसामा चार्यकुल्याद्यामहेन्द्रप्रभवाः स्मृताः ॥१३॥
ऋषिकुल्या कुमाराद्याः शुक्तिमत्पादसम्भवाः ।
आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः ॥१४॥
तास्विमे कुरुपाञ्चालाः मध्यदेशादयो जनाः ।
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥१५॥
पुण्ड्रा कलिङ्गा मगधा दक्षिणाद्याश्च सर्वशः ।
तथापरान्ताः सौराष्ट्राः सूराभीरास्तथार्बुदाः ॥१६॥
कारुषा मालवाश्चैव पारियात्रनिवासिनः ।
सौवीराः सैन्धवा हूणाः साल्वाः कोशलवासिनः ।
माद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा ॥१७॥
आसां पिबन्ति सलिलं वसन्ति सहिताः सदा ।
समीपतो महाभाग हृष्टपुष्टजनाः कुलाः ॥१८॥
चत्वारि भारते वर्षे युगान्यत्र महामुने ।
कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् ॥१९॥
तपस्तपन्ति मुनयो जुह्वते चात्र यज्विनः ।
दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥२०॥
पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ।
यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥२१॥
अत्राऽपि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥२२॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥२३॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।

स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥२४॥
कर्माण्यसङ्कल्पिततत्फलानि
सन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीनन्ते
तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥२५॥
जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धनम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः ॥२६॥
नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया ।
लक्षयोजनविस्तारं संक्षेपात् कथितं तव ॥२७॥
जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः ।
मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः ॥२८॥

भागवतेऽपि श्रीभगवतः शुकदेवस्योक्तौ पञ्चमस्कन्धे अ० १७।११ ।

तत्रापि भारतमेव वर्षं कर्मक्षेत्रम्, अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति—भा० ५।१७।११ ।

भारतेऽपि वर्षे भगवान् नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति—५।१९।९ ।

भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवो मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमान् ऋक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसंख्याताः—भाग० ५।१९।१६ ।

एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति—भाग० ५।१९।१७।

चन्द्रवसा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती

सिन्धुरन्धः शोणश्च नदौ, महानदी वेदस्मृतिऋृषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वत गोमती सरयू रोधस्वती सप्तवती सुषोमा शतद्रूश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः—भाग० ५।१९।१८।

अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ला-लोहित-कृष्ण-वर्णेन स्वारब्धेन कर्मणा दिव्य-मानुषनारकगतयो बह्वय आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते, यथावर्णविधानमपवर्गश्चापि भवति—भाग० ५।१६।१६।

योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्य-निमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः—भाग ५।१६।२०।

एतदेव हि देवा गायन्ति

अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्मलब्धं नृषु भारताजिरे
मुकुन्दसेवोपयिकं स्पृहा हि नः॥
(भाग० ५।१६।२१)

किं दुष्करैर्नः क्रतुभिस्तपोव्रतै-
र्दानादिभिर्वा द्युजयेन फल्गुना।
न यत्र नारायणपादपङ्कज-
स्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात्॥
(भाग० ५।१६।२२)

कल्पायुषां स्थानजयात् पुनर्भवात्
क्षणायुषां भारतभूजयो वरम्।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः॥
(भाग० ५।१६।२३)

न यत्र वैकुण्ठकथासुधापगा
न साधवो भागवतास्तदाश्रयाः।

न यत्र यज्ञेशमखा महोत्सवाः
सुरेशलोकोऽपि न वै स सेव्यताम् ॥

( भाग० ५।१६।२४ )

प्राप्ता नृजातिं त्विह ये च जन्तवो
ज्ञानक्रियाद्रव्यकलापसम्भृताम् ।
न वै यतेरन्नपुनर्भवाय ते
भूयो वनौका इव यान्ति बन्धनम् ॥

( भाग० ५।१६।२५ )

यैः श्रद्धया बर्हिषि भागशो हवि-
र्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
एकः पृथङ्नामभिराहुतो मुदा
गृह्णाति पूर्णः स्वयमाशिषा प्रभुः ॥

( भाग० ५।१६।२६ )

सत्यं दिशत्यर्थितमर्थितो नृणां
नैवार्थदो यत्पुनरर्थिता यतः ।
स्वयं विधत्ते भजतामनिच्छता-
मिच्छापिधानं निजपादपल्लवम् ॥

( भाग० ५।१६।२७ )

यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
तेनाजनाभे: स्मृतिमज्जन्म नः स्याद्
वर्षे हरिर्यद्भजतां शं तनोति ॥

( भाग० ५।१६।२८ )

सोऽयं महादेशोऽस्माकं धर्मप्राणो नाम। अत्र महादेशे भारतवर्षे जातानां निवसतां सर्वेषां जनानां जन्मत आरभ्य देहावसानं यावज्जीवनव्यवहारः परम्परागतः सर्वोऽपि कार्यक्रमो धर्ममय एवेति सर्वविदितम् ।

